ऋषति गच्छति हृदयमन्यस्वरेभ्य इति 'ऋषी गतौ' इत्यस्माद्धातोरौणादिके ऽभच्प्रत्यये ऋषभ इति रूपम्। यथा गोसमूहे बलीवर्दस्तथा स्वरसमूहे राशौ द्वितीयो बलवान्, ऋषभवन्नदतीति वा ऋषभः॥

'वाचं गानात्मिकां धत्त इति गांधारसंज्ञकः।'

गां गानात्मिकां वाचं धत्त इति 'धृञ् धारणे' इत्यस्माद्धातोर्गोशब्दे कर्मण्युपपदे ऽण्प्रत्यये पृषोदरादित्वाद्बहुलग्रहणाद्वा लुकि गांधार इति रूपम्। गान्धर्वसुखहेतुत्वाद्वा गांधारः॥

'स्वराणां मध्यमत्वाच्च मध्यमः स्वर इष्यते।
यद्वा मम धियो रोग इति मद्धयमशब्दनम्॥'

सप्तानां स्वराणां चतुर्थस्वरस्य मध्यस्थत्वात् 'मध्यान्मः' (४-३-८) इति भवार्थे मप्रत्यये मध्यम इति रूपम्। अथ वा मद्धियो ऽमो रोग इति मद्धयमः। श्रूयमाणः स्वत्रिरत्याशङ्कया पीडयतीत्यर्थः।

'स्वरान्तराणां विस्तारं यो मिमीते स पञ्चमः।
पाठक्रमेण गणने संख्यया पञ्चमो ऽथ वा॥'

'पचि विस्तारे' इत्यस्माद्धातोर्भावे घञि पञ्चं विस्तारं मिमीत इति 'आतो ऽनुपसर्गे कः' (३-२-३) इति कप्रत्यये पञ्चम इति रूपम्। 'ह्वावामश्च' (३-१-१) इत्यण्युक्च संज्ञात्वादुपेक्ष्यते। यद्वा पृषोदरादित्वाद्युगभाव आल्लोपश्च। स्वराणां क्रमेण गणने पञ्चमत्वाद्वा पञ्चमस्थानसंभूतत्वाद्वा पञ्चमः॥

'धीर्यस्यास्ति स धीवांस्तत्संबन्धी धैवतः स्मृतः।'

यद्वा,

'षष्ठस्थाने धृतो यस्मात्ततो ऽसौ धैवतो मतः।'

धीरस्यास्तीति धीवान्, तत्संबन्धित्वेन 'तस्येदम्' (४—३—१२) इत्यणि धैवत इति रूपम्। संबन्धित्वं चानेकप्रकारं निरूप्यनिरूपकलक्षणमास्वाद्यास्वादकलक्षणं जन्यजनकलक्षणं चेति। तत्रोत्तरस्वरेण संसृष्टश्रुतित्वात् स्थूलमतीनां दुर्विवेकत्वाद्धीमतः सूक्ष्ममतेरेव निरूप्यत्वाद्धैवत इति।

'संज्ञायाम्' (८—२—११) इति मतो वत्वम् । षष्ठस्थाने ललाटस्थाने धृतत्वाद्वा धैवतः ॥

'निषीदन्ति स्वराः सर्वे निषादस्तेन कथ्यते ।'

'षद्लृ विशरणे' इत्यस्माद्धातोर्निषीदन्ति पर्यवस्यन्त्यस्मिन्स्वरा इति 'अकर्तरि च' (३-३-१९) इति घञि निषाद इति रूपम् । इत्युक्तप्रकारेण ते स्वराः सप्तैवेति नियमे सप्तधात्वाश्रितत्वं सप्तचक्राश्रितत्वं वा निमित्तं मतङ्गोक्तमनुसंधेयम् ॥

अत्र यद्यप्याद्यक्षरोद्धारेण संज्ञान्तराङ्गीकारे षड्जर्षभगांधारधैवतानां सरिगधेति संज्ञा न सिध्यन्ति, तथा ऽपि मतङ्गाभिमतोद्धारक्रमेणोक्तसंज्ञोपपत्तिः । तथा हि—अत्राकचटतपयशा अष्टौ वर्गाः । तत्राष्टमस्य तृतीयं हरिबीजयुक्तमाद्यस्वरमुद्धरेत् । हरिबीजमकारः । सप्तमस्य द्वितीयं कामबीजयुक्तं द्वितीयस्वरमुद्धरेत् । कामबीजमिकारः । द्वितीयस्य तृतीयं हरिबीजयुक्तं तृतीयस्वरमुद्धरेत् । षष्ठस्य पञ्चममकारसंयुक्तं मध्यममुद्धरेत् । षष्ठस्य प्रथममकारयुक्तं पञ्चममुद्धरेत् । पञ्चमस्य चतुर्थमकारयुक्तं षष्ठस्वरमुद्धरेत् । पञ्चमस्य पञ्चमं कामबीजयुक्तं सप्तममुद्धरेत् । एतेषां स्वरत्वमाचार्यपरिभाषया संकेतमात्रमिति । अत्र स्वतो रञ्जयतीति व्युत्पत्त्या सहकारिकारणनैरपेक्ष्येण रञ्जकत्वं स्वरत्वं लक्ष्यताऽवच्छेदकम् । मारुताहत्युत्पन्नप्रथमक्षणवर्तिध्वन्यनन्तराविर्भवनशीलत्वे सत्यरूक्षत्वे सत्यनुस्वानरूपत्वं लक्षणम् । स्वतःशब्दोपपदात् 'रञ्ज रागे' इत्यस्माद्धातोः 'अन्येष्वपि दृश्यते' (३—२—१०१) इति डप्रत्यये टिलोपे पूर्वपदस्थतकारादेः पृषोदरादित्वाल्लोपे च स्वर इति रूपसिद्धिरिति कल्लिनाथप्रभृतयः प्राहुः ॥

ननु चतुर्थीसप्तमीनवम्यादीनां षड्जर्षभगांधारादिस्वराधारत्वस्य पूर्वमुक्तत्वेन तासां स्वरकारणत्वेनोपयोगे ऽपीतरासामकारणत्वेन कथमुपयोग इति चेत्, पूर्वपूर्वाभिकाङ्क्षयोच्चोच्चतरत्वरूपेण लक्षणेन, स्वोत्पत्तौ संख्यायां तुर्यादिव्यपदेशे च पूर्वासां तृतीयादीनामाकाङ्क्षितत्वेनोपयोगसंभवात् ॥

अथ श्रुतीनामन्योन्यमसंकीर्णतया स्वरूपपरिज्ञानार्थं कचित्तासां साजात्येन संगत्या रक्तिलाभार्थं चावान्तरभेदसहिता जातयो निरूप्यन्ते—दीप्ता ऽऽयता करुणा मृदुर्मध्या चेति पञ्च जातयः । तत्र दीप्ता चतुर्विधा

तीव्रा रौद्री वज्रिकोग्रेति ; आयता पञ्चविधा कुमुद्वती क्रोधा प्रसारिणी संदीपनी रोहिणीति; करुणा त्रिविधा दयावत्यालापिनी मदन्तिकेति; मृदुरपि चतुर्विधा मन्दा रतिका प्रीतिः क्षितिरिति ; मध्या षड्विधा च्छन्दोवती रञ्जनी मार्जनी रक्तिका रम्या क्षोभिणीति । तीव्राकुमुद्वतीमन्दाच्छन्दोवत्याख्या दीप्ताऽऽयतामृदुमध्याजातीनां प्रथमभेदाश्चत्वारः षड्जगताः । दयावतीरञ्जनीरतिकाऽऽख्याः करुणाजातेः प्रथमो मध्यामृदुजात्योर्द्वितीयौ चेति त्रयो भेदा रिषभगताः । रौद्रीक्रोधाख्यौ दीप्ताऽऽयताजात्योर्द्वितीयौ भेदौ गांधारगतौ । वज्रिकाप्रसारिणीप्रीतिमार्जन्याख्या दीप्ताऽऽयतामृदुमध्यानां तृतीया भेदाश्चत्वारोऽपि मध्यगताः । क्षितिरक्तासंदीपन्यालापिन्याख्या मृदुमध्यायताजातीनां चतुर्थास्त्रयो भेदाः करुणाजातेर्द्वितीयो भेदश्चेति चत्वारः पञ्चमगताः । मदन्तीरोहिणीरम्याऽऽख्याः करुणायास्तृतीयो भेद आयतामध्याजात्योः पञ्चमौ भेदौ चेति त्रयोऽपि धैवतगताः । उग्राक्षोभिण्याख्यौ दीप्तामध्याजात्योश्चतुर्थषष्ठौ भेदौ निषादगतौ । अतः षड्जादीनामुक्तजातिपञ्चकावान्तरभेदवत्त्वेन चतुःश्रुतिकत्वादिकमिति सिद्धम् । चतुःश्रुतिः षड्जः शुद्धः, त्रिश्रुती रिषभः शुद्धः, द्विश्रुतिर्गांधारः शुद्धः, चतुःश्रुतिर्मध्यमः शुद्धः, चतुःश्रुतिः पञ्चमः शुद्धः, त्रिश्रुतिर्धैवतः शुद्धः, द्विश्रुतिर्निषादः शुद्धः । एवंलक्षणाः सप्त स्वराः शुद्धस्वराः ॥

इति श्रीराजाधिराजभोसलकुलतिलकतुलजामहाराजविरचिते
संगीतसारामृते शुद्धस्वरप्रकरणं
द्वितीयम्

## अथ विकृतस्वरप्रकरणम् (३)

अमी शुद्धस्वराः सप्तापि मन्द्रमध्यतारस्थानभेदात्प्रत्येकं त्रिविधाः, मन्द्रषड्जो मध्यषड्जस्तारषड्ज इत्यादिव्यवहारात् । एत एव स्वराः सप्तापि षड्जमध्यमग्रामापेक्षया विकृतावस्थाऽऽपन्ना द्वादश भवन्ति । तथा हि—च्युतो ऽच्युतश्चेति षड्जो द्विविधः । निषादर्षभाभ्यां स्वाद्यन्तश्रुत्याक्रमणेन द्विश्रुतिः सन्षड्जश्च्युतसंज्ञां लभते । निषादे षड्जस्य प्रथमद्वितीयश्रुत्याक्रमणेन काकलीत्वं प्राप्ते सति द्विश्रुतिः सन्नच्युतसंज्ञां भजते । त्रिश्रुती रिषभः षाड्जीं श्रुतिं प्राप्य चतुःश्रुतिः सन्नेको विकृतो भवति । गांधारो मध्यमसाधारणे मध्यमस्याद्यां श्रुतिं प्राप्य त्रिश्रुतिः सन्साधारणत्वं च प्राप्यैको विकृतः, मध्यमस्याद्यद्वितीये द्वे श्रुती प्राप्य चतुःश्रुतिः सन्नन्तरत्वं च प्राप्यैको विकृत इति द्विधा । मध्यमः षड्जवच्च्युताच्युतत्वभेदेन द्विश्रुतिः सन्द्विविधः । पञ्चमो मध्यमग्रामे स्वोपान्त्यश्रुतिस्थस्त्रिश्रुतिः सन्नेको विकृतः, स्वोपान्त्यश्रुतिस्थ एव मध्यमान्तिमश्रुतिं प्राप्य चतुःश्रुतिः सन्नपरो विकृत इति सो ऽपि द्विविधः । धैवतो मध्यमग्रामे पञ्चमाधारश्रुतिं प्राप्य चतुःश्रुतिः सन्नेको विकृतः । निषादः षड्जस्याद्यां श्रुतिं प्राप्य त्रिश्रुतिः सन्कैशिकत्वं च प्राप्यैको विकृतः, आद्यद्वितीये द्वे श्रुती प्राप्य चतुःश्रुतिः सन्काकलीत्वं च प्राप्यापरो विकृत इति द्वेधा । एते द्वादश विकृतस्वराः शुद्धैः सप्तभिः स्वरैः सह भवन्त्येकोनविंशतिः ॥

ननूक्तमेकोनविंशतित्वमयुक्तम्, अच्युतषड्जचतुःश्रुतिकर्षभाच्युतमध्यमानां शुद्धषड्जशुद्धर्षभशुद्धमध्यमेभ्यः पृथग्ध्वनिभेदेनोपलम्भाभावात् ; तथा मध्यमग्रामविभाजकत्रिश्रुतिपञ्चमस्य स्वचतुर्थश्रुतिस्थशुद्धपञ्चमाद्भेदेनोपलम्भे ऽपि मध्यमस्य श्रुतिं प्राप्य चतुःश्रुतिकात्स्वस्य भेदेनोपलम्भाभावात् ; तथा मध्यमग्रामे पञ्चमस्य श्रुतिं प्राप्य चतुःश्रुतिकस्य धैवतस्य त्रिश्रुतिकाच्छुद्धधैवताद्भेदेनोपलम्भाभावात् ; अतो ऽच्युतषड्जचतुःश्रुतिकर्षभाच्युतमध्यमचतुःश्रुतिपञ्चमचतुःश्रुतिधैवताः पञ्चापि विकृताः शुद्धेभ्यः षड्जर्षभमध्यमपञ्चमधैवतेभ्यो नातिरिच्यन्त इति सप्तैव विकृताः, ते च शुद्धैः सह चतुर्दश भवन्तीति वक्तुं युक्तमिति चेत्, सत्यम् ; उक्तानां पञ्चानां

विकृतानां शुद्धेभ्यः स्वरूपतो भेदाभावे ऽपि लक्षणतः श्रुतिन्यूनाधिकत्वप्रयुक्तभेदस्य सत्त्वेन द्वादशानां विकृतानां शुद्धैः सप्तभिः सहैकोनविंशतित्वोपपत्तेः । मयूरादिप्राणिविशेषध्वनिनिदर्शनेनाऽपि षड्जादिस्वरूपपरिज्ञानसिद्धिः । तदुक्तं **शार्ङ्गदेवेन**—

'मयूरवृषभच्छागक्रौञ्चकोकिलदर्दुराः ।
गजश्च सप्त षड्जादीन्क्रमादुच्चारयन्त्यमी ॥'

इति । इयता प्रबन्धेन स्वराणामन्योन्यं स्वरूपकृतो भेदो ऽभिहितः । प्रसङ्गात् प्रयोगार्थं तेषां प्रकारभेदेन चातुर्विध्यं निरूप्यते । तथा हि—वादिसंवादिविवाद्यनुवादिभेदेन चतुर्विधाः स्वराः । वदनाद्वादी । वदनं नाम रागप्रतिपादकत्वम् । संवदनात्संवादी । संवदनं नाम वादिस्वरजनितरागगतरञ्जकत्वनिर्वाहकत्वम् । विवदनाद्विवादी । विवदनं नाम वाद्यादिस्वरोत्पादितरक्तिविनाशकत्वम् । अनुवदनादनुवादी । अनुवदनं नाम वादिसंवादिसंपादितरक्त्यनुकूलत्वम् । गानप्रयोगे ग्रहन्यासादिभेदेन पुनः पुनरावर्त्यमानत्वं वादिलक्षणम् । द्वादशाष्टान्यतरश्रुत्यन्तरितत्वं संवादिलक्षणम् । एकश्रुत्यन्तरितस्वरत्वं विवादिलक्षणम् । वादिसंवादिविवादिलक्षणरहितत्वमनुवादिलक्षणम् ॥

अत्र संवादिलक्षणपरिज्ञानार्थमादौ मण्डलप्रस्तारो वा वीणाप्रस्तारो वा लेखनीयः । तत्र मण्डलप्रस्तारो यथा—षड्डूर्ध्वरेखा लिखित्वा तदूर्ध्वाधः किंचिदग्राण्यवशेष्य मध्ये पञ्च तिर्यग्रेखाः किंचिदग्रावशेषं लिखेत् । तदा परितो रेखाऽग्राणि द्वाविंशतिर्भवन्ति । वीणाप्रस्तारो यथा—तिर्यग्रेखा एव द्वाविंशतिं लिखेत् । तत्र वामतो दक्षिणतो वा रेखाऽग्राणि द्वाविंशतिर्भवन्ति । तत्रैकस्मिञ्श्रुतिमण्डले रेखाऽग्रेषु शुद्धान्विकृतान्वा षड्जादीन्स्वस्वश्रुतिसंख्यया लिखेत् । तेषु ययोः स्वरयोरन्तरगोचराः स्वाधारश्रुतीर्विहाय मध्यवर्तिन्यः श्रुतयो द्वादशाष्टौ वा दृश्यन्ते तौ मिथः संवादिनौ भवत इति ज्ञातव्यम् । तत्र षड्जग्रामे शुद्धौ षड्जपञ्चमौ शुद्धावृषभधैवतौ शुद्धौ गांधारनिषादौ शुद्धौ षड्जमध्यमावपि संवादिनौ भवतः । मध्यमग्रामे तु पञ्चमर्षभौ संवादिनौ भवतः । तदुक्तं **भारतीये**—

'संवादो मध्यमग्रामे पञ्चमस्यर्षभस्य च ।
षड्जग्रामे तु षड्जस्य संवादः पञ्चमस्य च ॥'

इति । विवादिनौ यथा—शुद्धर्षभगांधारौ शुद्धधैवतनिषादौ च परस्पर-विवादिनौ भवतः । अत्रोक्तचतुर्विधेषु प्रधानत्वाद्वादी राजा ; तत्कार्यनिर्वाह-कत्वात्संवादी सचिवः ; तद्विरोधित्वाद्विवादी शत्रुः ; नृपामात्यानुकूल-त्वादनुवादी भृत्यः ॥

षड्जादिस्वराणां कुलादिज्ञानपूर्वकप्रयोगे भवत्यदृष्टातिशय इति तदपि ज्ञेयम् । तदुक्तं **रत्नाकरे**—

'गीर्वाणकुलसंभूताः षड्जगांधारमध्यमाः ।
पञ्चमः पितृवंशोत्थो रिधावृषिकुलोद्भवौ ॥
निषादोऽसुरवंशोत्थो ब्राह्मणाः समपञ्चमाः ।
रिधौ तु क्षत्रियौ ज्ञेयौ वैश्यजाती निगौ मतौ ॥
शूद्रावन्तरकाकल्यौ स्वरौ वर्णास्त्विमे क्रमात् ।
पद्माभः पिञ्जरः स्वर्णवर्णः कुन्दप्रभो हरित् ॥
पीतः कर्बुर इत्येषां जन्मभूमीरथ ब्रुवे ।
जम्बूशाककुशक्रौञ्चशाल्मलीश्वेतनामसु ॥
द्वीपेषु पुष्करे चैते जाताः षड्जादयः क्रमात् ।
वह्निर्वेधाः शशाङ्कश्च लक्ष्मीकान्तश्च नारदः ॥
ऋषयो ददृशुः पञ्च षड्जादींस्तुम्बुरुर्धनी ।
वह्निब्रह्मसरस्वत्यः शर्वश्रीशगणेश्वराः ॥
सहस्रांशुरिति प्रोक्ताः क्रमात्षड्जादिदेवताः ।
क्रमादनुष्टुब्गायत्री त्रिष्टुप्च बृहती ततः ॥
पङ्क्तिरुष्णिकच जगतीत्याहुश्छन्दांसि सादिषु ।
सरी वीरेऽद्भुते रौद्रे धो बीभत्से भयानके ॥
कार्यौ गनी तु करुणे हास्यशृङ्गारयोर्मपौ ।

इति ॥

इति श्रीराजाधिराजभोसलकुलतिलकतुलजामहाराजविरचिते
संगीतसारामृते विकृतस्वरप्रकरणं
तृतीयम्

## अथ ग्राममूर्च्छनाक्रमशुद्धतानकूटतानप्रकरणम् (४)

इत्थं स्वरेषु निरूपितेषु व्यस्तानां तेषां दृष्टादृष्टफलयोगित्वाभावात्तत्सिद्धये नियतसमस्तस्वरसंनिवेशरूपा मूर्च्छनाऽऽदयो निरूप्यन्ते। तदाश्रयत्वाद्व्यवस्थापकत्वाच्चादौ ग्रामो निरूप्यते। तत्र मूर्च्छनाऽऽदिसमाश्रयत्वे सति स्वरसमूहत्वं ग्रामसामान्यलक्षणम्। लौकिकवैदिकवाक्येष्वपि स्वरसमूहत्वसंभवात्तत्रातिव्याप्तिनिरासार्थं सत्यन्तम्। स त्रिविधः षड्जग्रामो मध्यमग्रामो गांधारग्रामश्चेति। तत्र षड्जग्राममध्यमग्रामौ द्वौ धरातले वर्तेते; गांधारग्रामस्तु स्वर्गलोक एव। ननु समूहित्वाविशेषेण सप्तानामपि स्वराणां ग्रामव्यपदेशकत्वसंभवे कथं भूलोके द्वावित्यवधारणमिति चेत्; उच्यते—शुद्धविकृतरूपद्विविधस्वरप्रयोगवशात्,

'द्वौ ग्रामौ विश्रुतौ लोके षड्जमध्यमसंज्ञकौ।'

इति मुनिवचनाच्चावधारणमुपपद्यते। तत्र शुद्धस्वराश्रयत्वादाद्यः षड्जग्रामः, विकृतस्वराश्रयत्वाद् द्वितीयो मध्यमग्रामः। स्वचतुर्थश्रुतिसंस्थितपञ्चमकत्वं षड्जग्रामलक्षणम्, स्वोपान्त्यश्रुतिसंस्थितपञ्चमकत्वं मध्यमग्रामलक्षणम्। तत्राद्यलक्षणे स्वपदानुपादाने मध्यमग्रामे ऽतिव्याप्तिः, मध्यमसाधारणावस्थायां मध्यमान्तिमश्रुतिमादाय तृतीयश्रुतिस्थस्यैव चतुर्थश्रुतिसंस्थत्वात्; स्वपदोपादाने तु स्वकीयचतुर्थश्रुतिसंस्थत्वाभावान्नातिव्याप्तिः। एवं द्वितीयलक्षणे स्वपदानुपादाने तस्यामवस्थायां द्वितीयश्रुतेरेवोपान्त्यत्वेनोपान्त्यश्रुतिसंस्थितपञ्चमकत्वं नास्तीति लक्षणस्यासंभवः स्यात्; तदुपादाने तृतीयश्रुतेरेव स्वोपान्त्यत्वेन तत्संस्थितपञ्चमकत्वं वर्तेत इति नासंभवः। अत्र त्रिश्रुतिधैवतकत्वं चतुःश्रुतिधैवतकत्वं च षड्जग्राममध्यमग्रामयोः साक्षान्न लक्षणम्; किं तु पञ्चमस्य चतुःश्रुतिकत्वं त्रिश्रुतिकत्वं चावगमयद् ग्रामयोर्द्वयोरुपलक्षणं भवति। ननु द्विविधस्वरप्रयोगवशादिह द्वावेव ग्रामौ स्याताम्, स्वरान्तरेषु सत्सु किं तयोः षड्जमध्यमाविशेषणेनेति चेन्न; आद्यत्वात् संवादिस्वरबाहुल्याच्च प्रथमग्रामे प्रधानः षड्ज इति षड्जग्रामव्यपदेशः; द्वितीयग्रामे मध्यमः प्रधानो

ऽविलोपित्वात्, अतस्तत्र मध्यमग्राम इति व्यपदेशः। अविलोपित्वं मध्यमस्याधस्तनानां सरिगाणामुपरितनानां च पधनीनां यथासंख्यं द्वयोर्द्वयोरेकत्र तन्त्र्यां संवाद इति मतानुसारेणैकाकिनो मध्यमस्यान्येन संवादाभावात् परिशेषादवधिभूतस्य लोपो नेष्यत इति केचित्; अन्ये तु शुद्धतानलक्षणावसरे षड्जर्षभनिषादपञ्चमहीनाश्चत्वारस्ताना इत्यादिना **भरतादि**भिर्मध्यमव्यतिरिक्तानामेव षाडवौडुवकारित्वेन लोपविधानान्मध्यमस्याविनाशित्वमित्याहुः। इति ग्रामलक्षणम्॥

अथ ग्रामलक्षणे तदाधेयत्वेन प्रथमोपात्ता मूर्च्छना निरूप्यन्ते। तल्लक्षणमुक्तं **संगीतरत्नाकरे**—

'क्रमात्स्वराणां सप्तानामारोहश्चावरोहणम्।
मूर्च्छनेत्युच्यते ग्रामद्वये ताः सप्त सप्त च॥'

इति। क्रमादिति कूटतानव्यावृत्त्यर्थम्। सप्तानामिति शुद्धतानव्यावृत्त्यर्थम्। आरोह्यवरोहिद्विविधवर्णालंकारव्यावृत्त्यर्थमारोहश्चावरोहणमिति। करणभूतया यया रागो मूर्च्छ्यते व्याप्यत इति वा श्रोता मूर्च्छ्यते मोह्यत इति वा मूर्च्छना। 'मुर्छा मोहसमुच्छ्राययोः' इति धातोर्ण्यन्ताद्युचि प्रत्यये मूर्च्छनेति रूपम्। षड्जग्राम उत्तरमन्द्राद्याः सप्त मूर्च्छनाः, मध्यमग्रामे सौवीर्याद्याः सप्त मूर्च्छनाः। तदुक्तं **शार्ङ्गदेवेन**—

'षड्जे तूत्तरमन्द्रा ऽऽद्या रजनी चोत्तरायता।
शुद्धषड्जा मत्सरीकृदश्वक्रान्ता ऽभिरुद्गता॥
मध्यमे स्यात्तु सौवीरी हारिणाश्वा ततः परम्।
स्यात्कलोपनता शुद्धमध्या मार्गी च पौरवी॥
हृष्यकेत्यथ तासां तु लक्षणं प्रतिपाद्यते।'

इति। मध्यस्थानस्थषड्जमारभ्य सप्तस्वरारोहणावरोहणरूपा मूर्च्छनोत्तरमन्द्रा, यथा सरिगमपधनि निधपमगरिस। मन्द्रस्थानस्थनिषादमारभ्य सप्तस्वरारोहणावरोहणरूपा मूर्च्छना रजनी, यथा निसरिगमपध धपमगरिसनि। निषादाधोऽधस्तनान् धपमगरीनारभ्य सप्तस्वरारोहणावरोहणरूपा मूर्च्छनाः क्रमेणोत्तरायताशुद्धषड्जामत्सरीकृदश्वक्रान्ताऽभिरुद्गताऽऽख्यास्तथैवोहनीयाः। यथा धनिसरिगमप पमगरिसनिध, उत्तरायता; पधनिसरिगम

मगरिसनिधप, शुद्धषड्जा ; मपधनिसरिग गरिसनिधपम, मत्सरीकृत् ; गमपधनिसरि रिसनिधपमग, अश्वक्रान्ता ; रिगमपधनिस सनिधपमगरि, अभिरुद्गता । एवं मध्यमग्रामे मध्यस्थानस्थमध्यममारभ्य सप्तस्वरारोहणावरोहणरूपा मूर्च्छना सौवीरी, यथा मपधनिसरिग गरिसनिधपम । मध्यस्थानस्थमध्यमाधोऽधस्तनान्गरिसनिधपानारभ्य सप्तस्वरारोहणावरोहणरूपा मूर्च्छनाः क्रमेण हारिणाश्वाकलोपनताशुद्धमध्यामार्गीपौरवींहृष्यकाऽऽख्याः षट् तथैवोहनीयाः ॥

एवं ग्रामद्वयगता मूर्च्छनाश्चतुर्दशापि प्रत्येकं चतुर्विधाः, यथा शुद्धाः काकलीसहिता अन्तरसहिताः काकल्यन्तरद्वयोपेताश्चेति । अत्र षड्जग्रामे सप्तानामपि स्वराणां विकारराहित्यं शुद्धत्वम् । मध्यमग्रामे तु पञ्चमधैवतव्यतिरिक्तानां विकारराहित्यं शुद्धत्वम् । पञ्चमस्य स्वोपान्त्यश्रुतिसंस्थस्यैव तद्ग्रामस्वरूपभेदनिर्वर्तकत्वात्, पञ्चमाधारश्रुतिं प्राप्य धैवतस्य चतुःश्रुतिकस्यैव तदुपलक्षकत्वात्तयोरपि तादवस्थ्यमेव शुद्धत्वम् । षड्जस्य श्रुतिद्वयं प्राप्य चतुःश्रुतिको निषादः काकल्याख्यः । मध्यमस्य श्रुतिद्वयं प्राप्य चतुःश्रुतिकः सन्गांधारो ऽन्तरसंज्ञः । अतो ग्रामद्वयगताश्चतुर्दश मूर्च्छनाः शुद्धादिभेदेन चातुर्विध्यं प्रतिपन्नाः सत्यः षट्पञ्चाशन्मूर्च्छना भवन्ति । तदुक्तं संगीतरत्नाकरे—

'चतुर्धा ताः पृथक्शुद्धाः काकलीकलितास्तथा ।
सान्तरास्तद्द्वयोपेताः षट्पञ्चाशदितीरिताः ॥
श्रुतिद्वयं चेत्षड्जस्य निषादः संश्रयेत्तदा ।
स काकली मध्यमस्य गांधारस्त्वन्तरः स्वरः ॥'

इति । उत्तरमन्द्राऽऽदिमूर्च्छनासु प्रथमादिसंख्यापरिज्ञानोपायस्तत्रैव कथितः । यथा—

'यस्यां यावतिथौ षड्जमध्यमौ ग्रामयोः क्रमात् ।
मूर्च्छना तावतिथ्येव सा निःशङ्केन कीर्तिता ॥'

इति । एतदुक्तं भवति—यस्यां मूर्च्छनायां षड्जः प्रथमः सा प्रथमा, यस्यां द्वितीयः सा द्वितीया, यस्यां तृतीयः सा तृतीयेत्येवं क्रमेण प्राथम्यादिकं परिज्ञातव्यमिति । एवं ग्रामद्वयगताः शुद्धादिभेदभिन्नाः षट्पञ्चाशन्मूर्च्छनाः प्रत्येकं सप्तविधाः । तदुक्तं रत्नाकरे—

'प्रथमादिस्वरारम्भादेकैका सप्तधा भवेत् ।
तासूच्चार्यान्त्यस्वरांस्तान्पूर्वानुच्चारयेत्क्रमात् ॥
ते क्रमास्तेषु संख्या स्याद् द्वानवत्या शतत्रयम् ।'

इति । अस्यार्थः—यस्यां मूर्च्छनायां यः प्रथमः स आदिर्येषां त इति तद्गुणसंविज्ञानबहुव्रीहिणा प्रथमादयः सप्त स्वराः प्रथमादिस्वराः, तेषामारम्भः क्रमादिमत्त्वेनोच्चारणं तस्मात् । एकैकेति, शुद्धादिभेदेनोक्तासु षट्पञ्चाशन्मूर्च्छनासु प्रत्येकमित्यर्थः । तासु मूर्च्छनास्वन्त्यस्वरान्तान् क्रमादुच्चार्य पूर्वान् क्रमादुच्चारयेदिति क्रमादित्यस्यावृत्त्या ऽन्वयः कर्तव्यः । पूर्वानारब्धस्वरादधस्तनान् । इह सप्तस्वरात्मके क्रमे पूर्वानुच्चारयेदिति लक्षणांशः प्रतिमूर्च्छनं प्रथमक्रमेष्वसंभव्यपि द्वितीयादिक्रमेषु रिगमपधनिस, गमपधनिसरीत्यादिषु संभवद्विषयो द्रष्टव्यः । एकस्यामुत्तरमन्द्रायामुदाहृत्य प्रदर्श्यते—सरिगमपधनीति प्रथमः क्रमः । रिगमपधनिसेति द्वितीयः । गमपधनिसरीति तृतीयः । मपधनिसरिगेति चतुर्थः । पधनिसरिगमेति पञ्चमः । धनिसरिगमपेति षष्ठः । निसरिगमपधेति सप्तमः । एवं धनिसरिगमपेत्युत्तरायताऽऽदिष्वपि साप्तविध्यं द्रष्टव्यम् । ननूत्तरायता प्रथमक्रमस्य रजनीसप्तमक्रमस्य चैकरूप्यात् कथं भेद इति चेत्, उच्यते—मध्यस्थानस्थितधैवतमारभ्य तारस्थानस्थपञ्चमान्तारोहणरूप उत्तरायतायाः प्रथमः क्रमः, रजन्याः सप्तमक्रमस्तु मन्द्रस्थानस्थितधैवतमारभ्य मध्यस्थानस्थितपञ्चमान्तारोहणरूप इति भेदस्यातिस्फुटत्वादित्यवहितचेतसा लक्ष्यज्ञेन निर्धारयितव्यम् । ते क्रमा इति, क्रमेणोच्चारितत्वादेते क्रमसंज्ञका इत्यर्थः । द्वानवत्या शतत्रयम्, द्वानवत्युत्तरशतत्रयमित्यर्थः ॥

ग्रामद्वयगतानां चतुर्दशमूर्च्छनानामधिदेवतास्तत्रैव निरूपिताः—

'यक्षरक्षोनारदाब्जभवनागाश्विपाशिनः ।
षड्जग्रामे मूर्च्छनानामेताः स्युर्देवताः क्रमात् ॥
ब्रह्मेन्द्रवायुगन्धर्वसिद्धद्रुहिणभानवः ।
स्युरिमा मध्यमग्राममूर्च्छनादेवताः क्रमात् ॥
तासामन्यानि नामानि नारदो मुनिरब्रवीत् ।
मूर्च्छनोत्तरवर्णा ऽऽद्या षड्जग्रामे ऽभिरुद्गता ॥
अश्वक्रान्ता च सौवीरी हृष्यका चोत्तरायता ।
रजनीति समाख्याता ऋषीणां सप्त मूर्च्छनाः ॥

आप्यायनी विश्वभृता चन्द्रा हेमा कपर्दिनी ।
मैत्री चान्द्रमसी पित्र्या मध्यमे मूर्च्छना इमाः ॥
नन्दा विशाला सुमुखी चित्रा चित्रवती सुखा ।
आलापा चेति गांधारग्रामे स्युः सप्त मूर्च्छनाः ॥
ताश्च स्वर्गे प्रयोक्तव्या विशेषात्तेन नोदिताः ।'

इति ॥

अथ ताना निरूप्यन्ते । ते च द्विविधाः शुद्धतानाः कूटतानाश्चेति । शुद्धा मूर्च्छनाः षाडवौडुवितीकृताः सत्यः शुद्धताना इत्युच्यन्ते । षड्जरिषभपञ्चमनिषादैर्हीनाः षड्जग्रामे ऽष्टाविंशतिः षाडवतानाः षड्जहीनाः सप्त रिषभहीनाः सप्त पञ्चमहीनाः सप्त निषादहीनाः सप्तेति । षड्जहीना यथा—रिगमपधनि, निरिगमपध, धनिरिगमप, पधनिरिगम, मपधनिरिग, गमपधनिरि, रिगमपधनीति । एवमुत्तरमन्द्रारजन्यादयः सप्त मूर्च्छनाः । रिषभहीना यथा—सगमपधनि, निसगमपधेत्यादि । पञ्चमहीना यथा—सरिगमधनीत्याद्या ऊहनीयाः । अत्र येषु भेदेष्वैकरूप्यं प्रतीयते तत्र स्थानभेदाद्भेदो द्रष्टव्यः । मध्यमग्रामे तु षड्जर्षभगांधारहीन एकविंशतिस्तानाः, षड्जहीनाः सप्त रिषभहीनाः सप्त गांधारहीनाः सप्त चेति । उभये षाडवा युता एकोनपञ्चाशत् । उभये षाड्जग्रामिका माध्यमग्रामिकाश्च मिलिताः सन्त एकोनपञ्चाशदित्यर्थः । षड्जग्रामे सपाभ्यां गनिभ्यां रिधाभ्यां च हीना एकविंशतिरौडुवतानाः, सपाभ्यां हीनाः सप्त द्विश्रुतिभ्यां हीनाः सप्तेति । सपाभ्यां हीना यथा—उत्तरमन्द्रायां रिगमधनि, रजन्यां निरिगमध, उत्तरायतायां धनिरिगम, शुद्धषड्जायामपि धनिरिगम, मत्सरीकृति मधनिरिग, अश्वक्रान्तायां गमधनिरि, अभिरुद्गतायां रिगमधनीति सप्त शुद्धतानाः । द्विश्रुतिभ्यां हीना यथा—आद्यायां सरिमपध, द्वितीयायामपि सरिमपध ; एवमन्ये ऽप्यूह्याः । मध्यमग्रामे रिधवर्जाः सप्त ताना निगवर्जाः सप्तेति चतुर्दश । रिधवर्जा यथा—सौवीर्यां मपनिसग, हारिणाश्वायां गमपनिस, कलोपनतायामपि गमपनिस ; एवमन्येऽप्यूह्याः । षाड्जग्रामिका माध्यमग्रामिकाश्च मिलित्वा पञ्चत्रिंशदौडुवतानाः । ग्रामयोर्द्वयोश्च षाडवा औडुवाश्च मिलित्वा चतुरशीतिः शुद्धतानाः । तदुक्तं रत्नाकरे—

'ताना: स्युर्मूर्च्छना: शुद्धा: षाडवौडुवितीकृता: ।
षड्जगा: सप्त हीनाश्चेत्क्रमात्सरिपसप्तमै: ॥
तदाऽष्टाविंशतिस्ताना मध्यमे सरिगोज्झिता: ।
सप्त क्रमाद्यदा ताना: स्युस्तदा त्वेकविंशति: ॥
एते चैकोनपञ्चाशदुभये षाडवा युता: ।
सपाभ्यां द्विश्रुतिभ्यां च रिधाभ्यां सप्त वर्जिता: ॥
षड्जग्रामे पृथक्ताना एकविंशतिरौडुवा: ।
रिधाभ्यां द्विश्रुतिभ्यां च मध्यमग्रामगास्तु ते ॥
हीनाश्चतुर्दशैत्र स्यु: पञ्चत्रिंशत्तु ते युता: ।
सर्वे चतुरशीति: स्युर्मिलिता: षाडवौडुवा: ॥'

इति ॥

अथ कूटताना निरूप्यन्ते । संपूर्णा असंपूर्णा वा शुद्धादिभेदेन चतुर्विधा अपि मूर्च्छना व्युत्क्रमेणोच्चारितस्वराश्चेत् कूटताना इत्युच्यन्ते । संपूर्णा नाम सप्तस्वरयुक्ता: । असंपूर्णास्त्वेकैकान्त्यान्त्यस्वरत्यागे सति षट्स्वरपञ्चस्वरचतु:स्वरत्रिस्वरैकस्वरा: । व्युत्क्रमोच्चारितस्वरा इत्यत्र स्वराणामानुपूर्व्या ऽऽरोह एव क्रम: ; तेष्वेकादिस्वरव्यत्यासो व्युत्क्रम: ; अवरोहे सत्यामपि विपरीतानुपूर्व्या क्रमत्वाभावेन । कूटत्वं नाम व्युत्क्रमोच्चारितस्वरत्वम् । अत्र षट्पञ्चाशन्मूर्च्छनास्वेकैकस्या: संपूर्णादिसप्तभेदेषु प्रतिभेदं वक्ष्यमाणप्रस्तारवशादियत्तया कूटतानसंख्या ग्रन्थकारेण प्रदर्शिता । तद्यथा—

'असंपूर्णाश्च संपूर्णा व्युत्क्रमोच्चारितस्वरा: ।
मूर्च्छना: कूटताना: स्युस्तत्संख्यामभिदध्महे ॥
पूर्णा: पञ्च सहस्राणि चत्वारिंशद्युतानि च ।
एकैकस्यां मूर्च्छनायां कूटताना: सह क्रमै: ॥
षट्पञ्चाशन्मूर्च्छनास्था: पूर्णा: कूटास्तु योजिता: ।
लक्षद्वयं सहस्राणि ञ्यशीतिर्द्वे शते तथा ॥
चत्वारिंशच्च संख्याता अथापूर्णान्प्रचक्ष्महे ।
एकैकान्त्यान्त्यविरहाद्भेदा: षट् षट्स्वरादय: ॥
एकस्वरोऽत्र निर्भेदोऽप्युक्तो नष्टादिसिद्धये ।
क्रमाश्चाकूटतानत्वेऽप्युक्तास्तेषूपयोगिन: ॥

स्युः षाडवानां विंशत्या सह सप्त शतानि तु ।
औडुवानां तु विंशत्या सहैकं शतमिष्यते ॥
चतुःस्वराणां कूटानां चतुर्विंशतिरीरिता ।
त्रिस्वराः षड् द्विस्वरौ द्वावेकस्त्वेकस्वरो मतः ॥
आर्चिको गाथिकश्चाथ सामिको ऽथ स्वरान्तरः ।
एकस्वरादितानानां चतुर्णामभिधा इमाः ॥'

इति । असंपूर्णकूटतानानां षाडवादीनां षण्णां सहेतुका मूलक्रमाः प्रस्तारवशप्राप्ताः संख्याभेदाश्च रत्नाकरे स्फुटतरं शार्ङ्गदेवेन निरूपिताः । तद्यथा—

'उक्तशुद्धादिभेदेन निगयुक्ताश्चतुर्विधाः ।
तयोरेकैकहीनाश्चेद् द्वेधा मूलक्रमा मताः ॥
षड्जाद्यौ मध्यमाद्यौ च चत्वारः स्युर्द्विधा द्विधा ।
चतुर्धा ऽन्ये दशेत्यष्टाचत्वारिंशदमी क्रमाः ॥
सविंशतिः सप्तशती प्रागुक्ता गुणिता क्रमैः ।
चतुस्त्रिंशत्सहस्राणि षष्ट्या पञ्च शतानि च ॥
इति षाडवसंख्या स्यादथ पञ्चस्वरान्त्रुवे ।
गाद्यौ धाद्यौ निषादाद्यौ चतुर्भेदाः षडौडुवाः ॥
अष्टावन्ये द्विधेत्येवं चत्वारिंशदमी क्रमाः ।
सविंशतौ शते तैश्च गुणिते ऽष्टौ शतानि च ॥
चत्वारि च सहस्राणि संख्या पञ्चस्वरेष्विति ।
चतुःस्वरेषु न्यादी द्वौ चतुर्धा द्वादशापरे ॥
क्रमा द्विधेति द्वात्रिंशच्चतुर्विंशतिताडिताः ।
शतानि सप्ताष्टषष्ट्या स्याच्चतुःस्वरसंमितिः ॥
त्रिस्वरेषु तु माद्यौ द्वावभेदौ द्वादशापरे ।
द्विधा षड्विंशतिरिति क्रमास्ते षड्भिराहताः ॥
षट्पञ्चाशच्छतं च स्युर्द्विस्वरेषु पुनर्द्विधा ।
रिगधन्यादयो ऽष्टौ स्युः शुद्धाः षडितरे क्रमाः ॥
द्वाविंशतिस्ते तु चतुश्चत्वारिंशद् द्विताडिताः ।
एकस्वरास्त्वभेदत्वान्मौला एव चतुर्दश ॥
षड्जादेः शुद्धमध्याया भेदकं पञ्चमं विना ।
चतुःस्वरे क्रमाद् द्वंद्वे ऽष्टाचत्वारिंशदीरिताः ॥

तानास्त्रिस्वरयोस्त्वेते द्वादश द्विस्वरे द्वयम् ।
एक एकस्वरस्ते त्रिषष्टिरौत्तरमन्द्रकैः ॥
पुनरुक्ता मतास्तानैर्न्यादिमार्गक्रमाः पुनः ।
पञ्चस्वरा ये चत्वारस्तत्तानानां चतुःशती ॥
अशीत्यभ्यधिका चातुःस्वरी षण्णवतिर्भवेत् ।
द्वादश त्रिस्वरद्वंद्वे चत्वारो द्विस्वरद्वये ॥
एक एकस्वरस्तानस्तेषां पञ्चशती त्वियम् ।
त्रिनवत्या युता तानैरभिन्ना रजनीगतैः ॥
धैवतादेस्तु पौरव्याश्चत्वारः षट्स्वराः क्रमात् ।
तत्तानानां तु साशीतिः शताऽष्टाविंशतिर्मता ॥
औडुवानां चतुर्णां प्रागुक्ता संख्या चतुःस्वरौ ।
त्रिस्वरौ द्विस्वरावेकस्वरः प्रागुक्तसंख्यकाः ॥
पञ्चविंशतिसंयुक्ता चतुस्त्रिंशच्छती त्वियम् ।
तानानां सदृशाकारा स्यात्तानैरौत्तरायतैः ॥
इत्येकाशीतिसंयुक्तं सहस्राणां चतुष्टयम् ।
तानानां पुनरुक्तानां पूर्णापूर्णैः सह क्रमैः ॥
अपनीयेत चेदेषा कूटतानमितिर्भवेत् ।
लक्षत्रयं सप्तदश सहस्राणि शतानि च ॥
नवत्रिंशद्युतानीति ज्ञानोपायो ऽत्र कथ्यते ।
अङ्कानेकादिसप्तान्तानूर्ध्वमूर्ध्वं लिखेत्क्रमात् ॥
हते पूर्वेण पूर्वेण तेषु चाङ्के परे परे ।
एकस्वरादिसंख्या स्यात्क्रमेण प्रतिमूर्च्छनम् ॥
क्रमं न्यस्य स्वरः स्थाप्यः पूर्वः पूर्वः परादधः ।
स चेदुपरि तत्पूर्वः पुरस्तूपरिवर्तिनः ॥
मूलक्रमक्रमात् पृष्ठे शेषाः प्रस्तार ईदृशः ।'

इति ॥

इति श्रीराजाधिराजभोसलकुलतिलकतुलजामहाराजविरचिते संगीतसारामृते ग्राममूर्च्छनाक्रमशुद्धतानकूटतानप्रकरणं चतुर्थम्

## अथ साधारणप्रकरणम् (५)

अथ विकृतस्वरप्रयोगप्रयुक्तगीतवैचित्र्यगानसाम्यावधारणाय साधारणं विविच्य निरूप्यते । तच्च द्विविधं स्वरसाधारणं जातिसाधारणं चेति । तत्र स्वरसाधारणं चतुर्विधं काकलिसाधारणमन्तरसाधारणं षड्जसाधारणं मध्यमसाधारणं चेति । तत्राद्यं यथा—द्विश्रुतिको निषादश्चतुःश्रुतिकषड्जस्य श्रुतिद्वयं प्राप्य चतुःश्रुतिकः सन् काकलीत्युच्यते ; स एव शुद्धषड्जनिषादोभयसंबन्धित्वात्तदुभयसाधारणो भवति । तथा च काकलिनो यत् साधारण्यं तदत्र साधारणपदेनाभिधीयते, मधुरपदेन माधुर्यमिव । धर्मपरत्वेन च साधारणमिति नपुंसकनिर्देशः । काकलिनः साधारणं काकलिसाधारणम् । द्वितीयं यथा—द्विश्रुतिको गांधारश्चतुःश्रुतिकमध्यमस्य श्रुतिद्वयं प्राप्यान्तरपदेनोच्यते ; अयमपि शुद्धमध्यमगांधारोभयश्रुतिसंबन्धित्वेन तदुभयसाधारणो भवति । तथा च तस्य यत्साधारण्यं तत्साधारणमिति भण्यते । ततश्चान्तरस्य साधारणमन्तरसाधारणमिति पूर्ववदिहापि तत्पुरुषसमासो द्रष्टव्यः । काकल्यन्तरयोरनयोः प्रयोगः षड्जसाधारणमध्यमसाधारणजातिसाधारणनिर्वचनं च **रत्नाकरे** विस्पष्टं प्रतिपादितम् । तद्यथा—

'प्रयोज्यौ षड्जमुच्चार्य काकलीधैवतौ क्रमात् ।
एवं मध्यममुच्चार्य प्रयुञ्जीतान्तरर्षभौ ॥
षड्जकाकलिनौ यद्वोच्चार्य षड्जं पुनर्व्रजेत् ।
तत्परान्यतमं चैवं मध्यमं चान्तरस्वरम् ॥
प्रयुज्य मध्यमो ग्राह्यस्तत्परो ऽन्यतमो ऽपि वा ।
अल्पप्रयोगः सर्वत्र काकली चान्तरः स्वरः ॥
निषादो यदि षड्जस्य श्रुतिमाद्यां समाश्रयेत् ।
रिषभस्त्वन्तिमां प्रोक्तं षड्जसाधारणं तदा ॥
मध्यमस्यापि गपयोरेवं साधारणं मतम् ।
साधारणं मध्यमस्य मध्यमग्रामगं ध्रुवम् ॥

साधारणे कैशिके ते केशाग्रवदणुत्वतः ।
ते एव कैश्चिदुच्येते ग्रामसाधारणे बुधैः ॥
एकग्रामोद्भवास्वेकांशासु जातिषु यद्भवेत् ।
समानं गानमार्यास्तज्जातिसाधारणं विदुः ॥
जातिसाधारणं केचिद्रागानेव प्रचक्षते ।'

इति राजाधिराजभोसलकुलतिलकतुलजामहाराजविरचिते
संगीतसारामृते साधारणप्रकरणं
पञ्चमम्

## अथ वर्णालंकारप्रकरणम् (६)

अथ 'समानं गानमार्यास्तज्जातिसाधारणं विदुः' इति जातिसाधारणनिरूपणे गानसंबन्धित्वेन प्रसक्तो वर्णो निरूप्यते। वर्णो नाम गानक्रिया। स्वरपदादेर्वर्णनाद्विस्तारकरणाद्गानक्रियाया वर्णत्वम्। स चतुर्विधः स्थायिवर्ण आरोहिवर्णो ऽवरोहिवर्णः संचारिवर्णश्चेति। एषां लक्षणानि रत्नाकर उक्तानि। तद्यथा—

'गानक्रियोच्यते वर्णः स चतुर्धा निरूपितः
स्थाय्यारोह्यवरोही च संचारीत्यथ लक्षणम्॥
स्थित्वा स्थित्वा प्रयोगः स्यादेकस्यैव स्वरस्य यः।
स्थायी वर्णः स विज्ञेयः परावन्वर्थनामकौ॥
एतत्संमिश्रणाद्वर्णः संचारी परिकीर्तितः।'

इति। एकस्यैवेत्येकैकस्येति वा। तत्रादौ 'सासासा रीरीरी' इत्येवमादिप्रयोगः, द्वितीये 'सारीगामा' इत्येवमादिप्रयोगः। परावन्वर्थनामकाविति, 'सरिगमपधनि' इत्यारोहादारोही 'निधपमगरिस' इत्यवरोहादवरोही। एतत्संमिश्रणात्, एतेषां स्थाय्यादीनां वर्णानाम् 'सारीसारीगा सानिधाधानिसा' इत्येवं यथायोगं मिश्रणात् संचारी वर्णः परिकीर्तितः। यत्र गानक्रियायां यस्य वर्णस्य बाहुल्यं दृश्यते तत्र तेन व्यपदेशः कर्तव्य इति मन्तव्यम्॥

**अथालंकारो निरूप्यते।** अलंकारो नाम विशिष्टवर्णसंदर्भः। वैशिष्ट्यं च नियतकलाऽऽदियुक्तत्वम्। विशिष्टपदोपादानाच्च न संचारिण्यतिप्रसङ्गः। अलंक्रियते ऽनेनेति करणव्युत्पत्तिर्विवक्षिता। गीतिरेतैः प्रसन्नादिप्रभृतिभिरलंक्रियते नारीव हारादिभी रसादिरिव चानुप्रासादिभिः। तथा चाह **भरतः** प्रकारान्तरेण—

'शशिना रहितेव निशा विजलेव नदी लता विपुष्पेव।
अविभूषितेव च वधूर्गीतिरलंकारहीना स्यात्॥'

इति । ते चालंकारा अनेकप्रकाराः । तत्र स्थायिवर्णगताः सप्त, आरोहिवर्णगता द्वादश, अवरोहिवर्णगताश्च द्वादश, संचारिवर्णगताः पञ्चविंशतिः, अन्येऽपि प्रसिद्धालंकाराः सप्तेति त्रिषष्टिरलंकाराः । तत्र स्थायिवर्णगता अलंकारा निरूप्यन्ते—येषामलंकाराणां स्वरसंबन्धिकलोपक्रमोपसंहारयोः षड्जादीनामन्यतमो भिन्नस्थानगतो ऽप्येक एव स्वरो भवति ते स्थायिवर्णगता अलंकाराः, तेषु स्थायिवर्णानुवृत्तिदर्शनात् । अत्र प्रकरणे मूर्च्छनाप्रथमस्वरो मन्द्रः । स एव द्विगुणस्तारसंज्ञः । प्रसन्नो मृदुरिति च मन्द्रस्य संज्ञाद्वयम् । दीप्त इति तारस्य संज्ञान्तरम् । लिपौ मन्द्रो बिन्दुशिराः, ऊर्ध्वरेखाशिरास्तारः, त्रित्वसंख्यारेखायुक्तः प्लुतः । एते त्रिषष्टिरप्यलंकारा भरतादिभिः सम्यङ् निरूपिताः । तद्यथा—

'प्रसन्नादिः प्रसन्नान्तः प्रसन्नाद्यन्तसंज्ञकः ।
ततः प्रसन्नमध्यः स्यात्पञ्चमः क्रमरेचितः ॥
प्रस्तारो ऽथ प्रसादः स्यात्सप्तैते स्थायिनि स्थिताः ।
मन्द्रद्वयात्परे तारे प्रसन्नादिरुदीरितः ॥

सं सं सं इति प्रसन्नादिः । (१)

तद्वैलोम्ये प्रसन्नान्तः

सं सं सं इति प्रसन्नान्तः । (२)

प्रसन्नद्वयमध्यगे ।

दीप्ते प्रसन्नाद्यन्तः स्यात्

सं सं सं इति प्रसन्नाद्यन्तः । (३)

तारयोर्मध्यगे पुनः ॥

मन्द्रे प्रसन्नमध्याख्यमलंकारं विदो विदुः ।

सं सं सं इति प्रसन्नमध्यः । (४)

आद्यन्तौ मूर्च्छनाऽऽदिश्चेत्स्वरौ मध्यो द्वितीयकः ॥
सैका कला ऽथ चेन्मध्ये स्तस्तृतीयचतुर्थकौ ।
सा द्वितीया पञ्चमाद्याश्रयो ऽन्तश्चेत्कला परा ॥
एवं कलात्रयेणोक्तो ऽलंकारः क्रमरेचितः ।

संरिसं संगमसं संपधनिसं इति क्रमरेचितः । (५)

दीप्तो ऽन्तश्चेत्प्रतिकलं प्रस्तारः सो ऽभिधीयते ॥

सं रि सं सं ग म सं सं प ध नि सं इति प्रस्तारः । (६)

तारमन्द्रविपर्यासात्तं प्रसादं प्रचक्षते ।

सं रि सं सं ग म सं संपधनिसं इति प्रसादः । (७) इति स्थायिवर्णगतालंकाराः ।

स्यातां विस्तीर्णनिष्कर्षौ बिन्दुरभ्युच्चयो ऽपरः ।
हसितप्रेङ्खिताक्षिप्तसंधिप्रच्छादितास्तथा ॥
उद्गीतोद्वाहितौ तद्वत् त्रिवर्णो वेणुरित्यमी ।
द्वादशारोहिवर्णस्थालंकाराः परिकीर्तिताः ॥
मूर्च्छनाऽऽदेः स्वराद्यत्र क्रमेणारोहणं भवेत् ।
स्थित्वा स्थित्वा स्वरैर्दीर्घैः स विस्तीर्णो ऽभिधीयते ॥

सा री गा मा पा धा नी इति विस्तीर्णः । (१)

ह्रस्वैः स्वरैः स निष्कर्षो द्विर्द्विरुक्तैर्निरन्तरैः ।

स स रि रि ग ग म म प प ध ध नि नि इति निष्कर्षः । (२)

त्रिश्चतुर्वा स्वरोच्चारैर्गात्रवर्णमिमं विदुः ॥

स स स रि रि रि ग ग ग म म म प प प ध ध ध नि नि नि ससससरि-
रिरिरिगगगगममममपपपपधधधधनिनिनिनि एतौ द्वौ गात्रवर्णभेदौ ;

निष्कर्षस्यैव भेदौ द्वौ केचिदेतौ बभाषिरे ।

इति मतान्तरेण निष्कर्षभेदौ । (१)

प्लुतं ह्रस्वं प्लुतं ह्रस्वं प्लुतं ह्रस्वं प्लुतं स्वरम् ॥
कुर्वन्क्रमाद्यदाऽऽरोहेत्ततो बिन्दुरयं मतः ।

स३रिग३मप३धनि३ इति बिन्दुः । (३)

एकान्तरस्वरारोहमाहुरभ्युच्चयं बुधाः ॥

सगपनि इत्यभ्युच्चयः । (४)

यत्रैकोत्तरवृद्धाभिरावृत्तिभिरुदीरिताः ।
आरुह्यन्ते स्वराः प्राह हसितं तं शिवप्रियः ॥

सरिरिगगगममममपपपपपधधधधधधनिनिनिनिनिनिनि इति हसितः । (५)

स्वरद्वयं समुच्चार्य पूर्वपूर्वयुतं परम् ।
यदाऽऽन्दोलितमारोहेत् प्रेङ्खितो ऽसौ क्रमो ऽथ वा ॥

सरि, रिग, गम, मप, पध, धनि इति प्रेङ्खितः । (६)

एकान्तरं स्वरयुगं तादृक्पूर्वयुतं परम् ।
क्रमादारोहति यदा तदाऽऽक्षिप्तं प्रचक्षते ॥

सग गम पनि इत्याक्षिप्तः । (७)

त्रिस्वराद्या कलाऽन्ये च पूर्वपूर्वान्तिमादिमे ।
कले स्तस्त्रिस्वरे यत्र संधिप्रच्छादितस्तु सः ॥

सरिग गमप पधनि इति संधिप्रच्छादितः । (८)

यद्याद्यस्त्रिस्त्रिरावृत्तः कलयोस्त्रिस्वरात्मनोः ।
तदोद्गीतः

सससरिग मममपध इत्युद्गीतः । (९)

मध्यमेन तादृशोद्वाहितो मतः ॥

सरिरिरिग मपपपध इत्युद्वाहितः । (१०)

अन्त्यस्य तु त्रिरावृत्तौ त्रिवर्णं वर्णयन्त्यमुम् ।

सरिगगग मपधधध इति त्रिवर्णः । (११)

त्रयाणां तु त्रिरावृत्तौ पृथग्वेणिरुदीरितः ॥

सरिग सरिग सरिग मपध मपध मपध इति वेणिः । (१२)

इत्यारोहिवर्णगता अलंकाराः ।

अवरोहक्रमादेते द्वादशाप्यवरोहिणि ।

इत्यवरोहिवर्णगता अलंकाराः ।

मन्द्रादिर्मन्द्रमध्यश्च मन्द्रान्तः स्यादतः परम् ॥
प्रस्तारश्च प्रसादो ऽथ व्यावृत्तः स्खलिताह्वयः ।
परिवृत्ताक्षेपबिन्दूद्वाहितोर्मिसमास्तथा ॥
प्रेङ्खनिष्कूजितश्येनक्रमोद्घट्टितरञ्जिताः ।
संनिवृत्तप्रवृत्तो ऽथ वेणुश्च ललितस्वरः ॥
हुङ्कारो ह्लादमानश्च ततः स्यादवलोकितः ।
स्युः संचारिण्यलंकाराः पञ्चविंशतिरित्यमी ॥
त्रिस्वराद्या कलैकैकमन्द्रत्यागेन चापराः ।
त्रिस्वराश्चेत्कला मन्द्राद्या मन्द्रादिस्तदा भवेत् ॥

सगरि रिमग गपम मधप पनिध इति मन्द्रादिः । (१)

ताः कला मन्द्रमध्यान्त्याः क्रमाच्चेदपरौ तदा ।

गसरि मरिग पगम धमप निपध इति मन्द्रमध्यः । (२)

गरिस मगरि पमग धपम निधप इति मन्द्रान्तः । (३)

त्यक्तान्तरं स्वरयुगं त्यक्तादारभ्यते पुनः ॥

युगं तादृक्समारोहेत्तदा प्रस्तार उच्यते ।

सग रिम गप मध पनि इति प्रस्तारः । (४)

पूर्वः पूर्वः परस्योर्ध्वाधोवर्ती क्रियते स्वरः ॥

यदा तदा प्रसादं तमाह श्रीकरणेश्वरः ।

सरिस रिगरि गमग मपम पधप धनिध इति प्रसादः । (५)

चतुःस्वरा कला तत्राद्यात्तृतीयं द्वितीयकात् ॥

तुर्यं गत्वा ऽऽदिमं गच्छेदेवमेकैकहानतः ।

चतुःस्वराः परा यत्र स व्यावृत्तः स्मृतो बुधैः ॥

सगरिमस रिमगपरि गपमधग मधपनिम इति व्यावृत्तः । (६)

कलां प्रयुज्य मन्द्रादेर्द्विरुक्तोर्ध्वस्वरान्विताम् ।

अवरुह्येत चेदेष स्खलिताख्यस्तदा भवेत् ॥

सगरिममरिगस रिमगपपगमरि गपमधधमपग मधपनिनिपधम इति स्खलितः । (७)

स्वरं द्वितीयमुज्झित्वा त्रिस्वरा ऽद्या कला यदि ।

त्यक्तादारभ्य तादृश्यो ऽन्यास्तदा परिवर्तकः ॥

सगम रिमप गपध मधनि इति परिवर्तकः । (८)

त्रिस्वराश्चेत्कलाः पूर्वपूर्वत्यागोर्ध्वसंक्रमैः ।

तदा ऽऽक्षेपः

सरिग रिगम गमप मपध पधनि इत्याक्षेपः । (९)

अथ बिन्दुः स्याद्यत्र प्लुतमधःस्वरम् ॥

कृत्वा ऽग्रिमस्वरं स्पृष्ट्वा ऽधःस्पर्शेनाखिलाः कलाः ।

स३रिस रि३गरि ग३मग म३पम प३धप ध३निध इति बिन्दुः । (१०)

कलायां त्रीन्स्वरान्गीत्वा ऽवरुह्यैकं पराः कलाः ॥

यत्रैकैकोज्झिता गीतास्तद्वदुद्वाहितस्तु सः ।

सरिगरि रिगमग गमपम मपधप पधनिध इत्युद्वाहितः । (११)

मूर्च्छनाऽऽदेः स्वरात्तुर्यं प्लुतीकृत्याद्यमेत्य च ॥

तुर्यगाने कलैकैकहानाद्यत्रापरास्तथा ।

स ऊर्मिः स्यात्

समम३सम रिप३रिप गध३गध मनि३मनि इत्यूर्मिः । (१२)

स तु समः कला यत्र चतुःस्वराः ॥

तुल्यारोहावरोहैकैकहानादपरास्तथा ।

सरिगममगरिस रिगमपपमगरि गमपधधपमग मपधनिनिधपम इति समः । (१३)

कला गतागतवती द्विस्वरैकैकहानतः ।

यत्रान्यास्तादृशः स स्यात्प्रेङ्खः

सरिरिस रिगगरि गममग मपपम पधधप धनिनिध इति प्रेङ्खः । (१४)

निष्कूजितः पुनः ॥

प्रसादस्य कलां गीत्वा तत्कलाऽऽदेस्तृतीयकम् ।

गत्वा ऽऽद्यगानाद्भवति

सरिसगस रिगरिमरि गमगपग मपमधम पधपनिध इति निष्कूजितः । (१५)

श्येनः संवादियुग्मकैः ॥

क्रमात्सारिगमाद्यैः स्यात्

सप रिध गनि मस इति श्येनः । (१६)

कला द्वित्रिचतुःस्वराः ।

आद्यस्वराद्यास्तिस्रः स्युर्द्वितीयाद्यादयस्तथा ॥

यत्रासौ क्रम इत्युक्तः

सरिसारिगसरिगम रिगरिगमरिगमप गमगमपगमपध मपमपधमपधनि इति क्रमः । (१७)

स तूद्घट्टित उच्यते ।

यत्र स्वरद्वयं गीत्वा पञ्चमाच्चतुरः स्वरान् ॥

अवरोहेत्कलां तद्वदेकैका रिषभात्पराः ।

सरिपमगरि रिगधपमग गमनिधपम इत्युद्घट्टितः । (१८)

द्विरुक्ता यदि मन्द्रान्ता मन्द्रादेः स्युः कलास्तदा ।

रञ्जितः

सगरि सगरिस रिमगरिमगरि गपमगपमग मधपमधपम पनिधपनिधप इति रञ्जितः । (१९)

अथ भवेदेष संनिवृत्तप्रवृत्तकः ॥

यत्राद्यपञ्चमौ गीत्वा तुर्यात् त्रीनवरोहति ।

क्रमात्कला सा यत्रान्यास्तद्वदेकैकहानतः ॥

सपमगरि रिधपमग गनिधपम इति संनिवृत्तप्रवृत्तकः । (२०)

यत्राद्यः स्याद् द्विर्द्वितीयचतुर्थकतृतीयकाः ।
सकृत्कला ऽन्याश्चैकैकह्रानाद्वेणुरसौ मतः ॥

ससरिमग रिरिगपम गगमधप ममपनिध इति वेणुः । (२१)

गीत्वा ऽऽद्यौ द्वौ चतुर्थं च यस्यां तावनरोहति ।
सा कला ऽन्याश्च तादृश्यो यत्रासौ ललितस्वरः ॥

सरिमरिस रिगपगरि गमधमग मपनिपम इति ललितस्वरः । (२२)

आदिमेन कला यत्र द्विस्वरा ऽऽद्या गतागतैः ।
स्वरैरेकोत्तरं वृद्धैः स हुङ्कारो निगद्यते ॥

सरिस सरिगरिस सरिगमगरिस सरिगमपमगरिस सरिगमपधपमगरिस सरिगमपधनिधपमगरिस इति हुङ्कारः । (२३)

ह्रादमाने प्रसन्नान्ता मन्द्रादेस्तु कला मताः ।

सगरिस रिमगरि गपमग मधपम पनिधप इति ह्रादमानः । (२४)

यदा ऽऽरोहे ऽवरोहे च स्वद्वितीयं परित्यजेत् ॥
चतुःस्वरा समकला तदा स्यादवलोकितः ।

सगममरिस रिमपपगरि गपधधमग मधनिनिपम इत्यवलोकितः । (२५)

इति संचारिवर्णगता अलंकाराः ।

अन्ये ऽपि सप्तालंकारा गीतज्ञैरुपदर्शिताः ॥
तारमन्द्रप्रसन्नश्च मन्द्रतारप्रसन्नकः ।
आवर्तकः संप्रदानो विधूतो ऽप्युपलोलकः ॥
उल्लासितश्चेति तेषामधुना लक्ष्म कथ्यते ।
कलास्तेषां द्वितीयाद्याः पूर्वैकैकप्रहाणतः ॥
अष्टमस्वरपर्यन्तमारुह्याद्यं व्रजेद्यदि ।
तारमन्द्रप्रसन्नो ऽयमलंकारस्तदोच्यते ॥

संरिगमपधनिसंसं इति तारमन्द्रप्रसन्नः । (१)

मन्द्रादष्टममुत्प्लुत्य सप्तकस्यावरोहणे ।
मन्द्रतारप्रसन्नाख्यमाह माहेश्वरोत्तमः ॥

संसंनिधपमगरिसं इति मन्द्रतारप्रसन्नः । (२)

आद्यं द्वितीयमाद्यं च द्विर्द्विर्गीत्वा द्वितीयकम् ।
सकृदाद्यं यत्कलायां गायेदावर्तकस्तु सः ॥

ससरिरिससारिस रिरिगगरिरिगरि गगममगगमग ममपपममपम पपधध-
पपधप धधनिनिधधनिध इत्यावर्तकः । (३)

एतस्यैव कला ऽन्त्यौ द्वौ स्वरौ संत्यज्य गीयते ।
यदा तदा संप्रदानमलंकारं विदुर्बुधाः ॥

ससरिरिसस रिरिगगरिरि गगममगग ममपपमम पपधधपप धधनिनिधध
इति संप्रदानकः । (४)

युग्ममेकान्तरितयोस्त्यक्त्वाद्य्येवमेव चेत् ।
द्विर्द्विः प्रयुज्येत तदा विधूतो बुधसंमतः ॥

सगसग रिमरिम गपगप मधमध पनिपनि इति विधूतः । (५)

कलायामाद्ययोर्युग्मं चेत्तृतीयद्वितीययोः ।
द्विर्द्विः प्रयुज्यते तज्ज्ञैरुपलोलस्तदोच्यते ॥

सरिसरिगरिगरि रिगरिगमगमग गमगमपमपम मपमपधपधप पधपध-
निधनिध इत्युपलोलः । (६)

द्विर्गीत्वा ऽऽद्यं तृतीयं च प्रथमं च तृतीयकम् ।
सकृद्गायेद्यत्कलायां तमुल्लासितमूचिरे ॥

ससगसग रिरिमरिम गगपगप ममधमध पपनिपनि इत्युल्लासितः । (७)
इति सप्तालंकाराः ।

इति प्रसिद्धालंकारास्त्रिषष्टिरुदिता मया ।
अनन्तत्वात्तु ते शास्त्रे न सामस्त्येन कीर्तिताः ॥
रक्तिलाभः स्वरज्ञानं वर्णाङ्गानां विचित्रता ।
इति प्रयोजनान्याहुरलंकारनिरूपणे ॥

इति श्रीराजाधिराजभोसलकुलतिलकतुलजामहाराजविरचिते
संगीतसारामृते वर्णालंकारप्रकरणं
षष्ठम्

## अथ जातिप्रकरणम् (७)

**अथ जातयो निरूप्यन्ते ।** शुद्धजातयः सप्त विकृतसंसर्गजन्या एकादश मिलित्वा ऽष्टादश । तत्र षड्जादिस्वराभिधाः शुद्धाः, तासां षाड्ज्यार्षभी गांधारी मध्यमा पञ्चमी धैवती नैषादीति संज्ञाः सप्तानां क्रमादिति । सरिगादिस्वरन्यासांशापन्यासग्रहत्वे सति सप्तस्वरयुक्तत्वं शुद्धत्वम् । इमा एव विकृतावस्थाऽऽपन्ना विकृता इत्युच्यन्ते । विकृतत्वं च क्रमेण साद्येकस्वरन्यासत्वे सत्यनियतसादीतरस्वरांशापन्यासग्रहकत्वे सति संपूर्णत्वम् । षाड्जीगांधारिकाभ्यां षड्जकैशिकी ; षाड्जीमध्यमाभ्यां षड्जमध्यमा ; गांधारीपञ्चमाभ्यां मिलिताभ्यां गांधारपञ्चमी ; गांधार्यार्षभिकाभ्यामान्ध्री ; षाड्जीगांधारिकाधैवतीभ्यो मिलिताभ्यः षड्जोदीच्यवा ; नैषादीपञ्चम्यार्षभिकाभ्यो युताभ्यः कार्मारवी ; गांधारीपञ्चम्यार्षभिकाभ्यो युताभ्यो नन्दयन्ती ; गांधारीधैवतीषाड्जीमध्यमाभ्यो युताभ्यो गांधारोदीच्यवा ; गांधारीधैवतीपञ्चमीमध्यमाभ्यो मिलिताभ्यो मध्यमोदीच्यवा ; गांधारीनैषादीपञ्चमीमध्यमाभ्यो युताभ्यो रक्तगांधारी ; आर्षभीं धैवतीं च त्यक्त्वा पञ्चभ्यः कैशिकी ; एवमेकादशोत्पन्नाः । आस्वष्टादशसु मध्ये षाड्जी षड्जकैशिकी षड्जोदीच्यवा षड्जमध्यमा नैषादी धैवत्यार्षभी चैताः सप्त षड्जग्रामस्य जातयः । शेषा गांधारीमध्यमापञ्चम्यस्तिस्रो गांधारोदीच्यवारक्तगांधारीकैशिकीमध्यमोदीच्यवाकार्मारवीगांधारपञ्चम्यान्ध्रीनन्दयन्त्यो ऽष्ट मिलित्वैकादश मध्यमग्रामस्य जातयः । पुनरासां मध्ये कार्मारवीगांधारपञ्चमीषड्जकैशिकीमध्यमोदीच्यवाश्चतस्रो नित्यपूर्णाः । षाड्जीनन्दयन्त्यान्ध्रीगांधारोदीच्यवाश्चतस्रः संपूर्णषाडवाः । अवशिष्टा दश, आर्षभ्यादयः षट् षड्जोदीच्यवाषड्जमध्यमारक्तगांधारीकैशिक्यश्चतस्रो मिलित्वा दश संपूर्णषाडवौडुवा मताः । आसां मध्ये पञ्चमीमध्यमाषड्जमध्यमाऽऽख्यासु तिसृषु स्वरसाधारणं भरतादिभिः प्रोक्तम् । समपेष्वंशेष्वेतत्स्वरसाधारणं स्वरप्रकरणोक्तप्रयोगनियमाद्भवेत् । एतत्स्वरसाधारणं कम्बलाश्वतरादीनामल्पानिगासु जातिषु संमतम् । अल्पद्विश्रुतिकग्राम-

रागादिषु दशविधेष्वपि भरतादीनां संमतम् । निगयोरंशयोः सतोः षड्जमध्यमायां न तद्भवेदिति विशेषनिषेधः । विकृता एव जातयः स्वरसाधारणाश्रया इति विशेषनियमः । नन्दयन्तीमध्यमोदीच्यवागांधारपञ्चम्यस्तिस्र एकांशाः, धैवतीगांधारोदीच्यवापञ्चम्यस्तिस्रो द्व्यंशाः, नैषाद्यार्षभीषड्जकैशिक्यस्तिस्रस्त्र्यंशिकाः, आन्ध्रीकार्मारवीषड्जोदीच्यवास्तिस्रश्चतुरंशिकाः, रक्तगांधारी गांधारी मध्यमा षाड्जीति चतस्रः पञ्चांशाः, एकैव कैशिकी षडंशा, षड्जमध्यमा तु सप्तांशा, इति सूरिभिः कथितम् । इत्यष्टादशसु जातिषु त्रिषष्टिरंशाः ।

'ग्रहांशतारमन्द्राश्च न्यासापन्यासकौ तथा ।
अपि संन्यासविन्यासौ बहुत्वं चाल्पता ततः ॥
एतान्यन्तरमार्गेण सह लक्ष्माणि जातिषु ।
षाडवौडुविते कापीत्येवमाहुस्त्रयोदश ॥
गीतादिनिहितस्तत्र स्वरो ग्रह इतीरितः ।
तत्रांशग्रहयोरन्यतरोक्तावुभयग्रहः ॥
यो रक्तिव्यञ्जको गेये यत्संवाद्यनुवादिनौ ।
विदार्यां बहुलौ यस्मात्तारमन्द्रव्यवस्थितिः ॥
यः स्वयं यस्य संवादी चानुवादी स्वरो ऽपरः ।
न्यासापन्यासविन्याससंन्यासग्रहतां गतः ॥
प्रयोगे बहुलः स स्याद्वाद्यंशो योग्यतावशात् ।
बहुलत्वं प्रयोगेषु व्यापकं त्वंशलक्षणम् ॥
मध्यमे सप्तकेंशः स्यात्तस्मात्तारस्थितात्परान् ।
स्वरांश्चतुर आरोहेदेष ताराविधिः परः ॥
अर्वाक्तु कामचारः स्यात्तारे लुप्तो ऽपि गण्यते ।
आतारषड्जमारोहो नन्दयन्त्यां प्रकीर्तितः ॥
मध्यस्थानस्थितादंशादामन्द्रस्थांशमाव्रजेत् ।
आमन्द्रन्यासमथ वा तदधःस्थरिधावपि ॥
एषा मन्द्रगतेः सीमा ततो ऽर्वाक्कामचारिता ।
गीते समाप्तिकृन्न्यास एकविंशतिधा च सः ॥

षाड्ज्यादीनां तु सप्तानां न्यासः स्यान्नामकृत्स्वरः ।
द्वौ नामकारिणौ षड्जमध्यमायां तु तौ मतौ ॥
उदीच्यवात्रयं मान्तं निषगान्ता तु कैशिकी ।
कार्मारवी पञ्चमान्ता गान्ताः पञ्चापराः स्मृताः ॥
अपन्यासस्वरः स स्याद्यो विदारीसमापकः ।
कार्मारव्यां च नैषाद्यामान्ध्रीमध्यमयोस्तथा ॥
आर्षभ्यां च स्वरा येंशास्ते ऽपन्यासाः प्रकीर्तिताः ।
उदीच्यवानां त्रितये ऽपन्यासौ षड्जधैवतौ ॥
मध्यमो रक्तगांधार्यां गांधार्यां षड्जपञ्चमौ ।
सरिपाः षड्जकैशिक्यां पञ्चम्यां निरिपाः स्मृताः ॥
रिपौ गांधारपञ्चम्यां षाड्ज्यां गांधारपञ्चमौ ।
धैवत्यां रिमधाः प्रोक्ता नन्दयन्त्यां मपौ मतौ ॥
रिवर्ज्याः षड्जकैशिक्यां सप्तापीत्यूचिरे परे ।
सप्तस्वरापन्यासां तु भाषन्ते षड्जमध्यमाम् ॥
अत्र येंशा अपन्यासास्ते स्युरेकोनविंशतिः ।
सप्तत्रिंशत्परे ते च षट्पञ्चाशत्तु संयुताः ॥
कैशिक्यां सप्तपक्षे तान्सप्तपञ्चाशतं विदुः ।
अंशाविवादी गीतस्याद्यविदारीसमाप्तिकृत् ॥
संन्यासोंशाविवाद्येव विन्यासः स तु कथ्यते ।
यो विदारीभागरूपपदप्रान्ते ऽवतिष्ठते ॥
अलङ्घनात्तथा ऽभ्यासाद्बहुत्वं द्विविधं मतम् ।
पर्यायांशे स्थितं तच्च वादिसंवादिनोरपि ॥
अल्पत्वं च द्विधा प्रोक्तमनभ्यासाच्च लङ्घनात् ।
अनभ्यासस्त्वनंशेषु प्रायो लोप्येष्वपीष्यते ॥
ईषत्स्पर्शो लङ्घनं स्यात्प्रायस्तल्लोप्यगोचरम् ।
उशन्ति तदनंशे ऽपि कचिद्गीतविशारदाः ॥
न्यासादिस्थानमुज्झित्वा मध्ये मध्ये ऽल्पतायुजाम् ।
स्वराणां या विचित्रत्वकारिण्यंशादिसंगतिः ॥
अनभ्यासैः कचित्कापि लङ्घनैरेव केवलैः ।
कृता सान्तरमार्गः स्यात्प्रायो विकृतजातिषु ॥

षडवन्ति प्रयोगं ये स्वरास्ते षाडवा मताः ।
षट्स्वरं तेषु जातत्वाद्गीतं षाडवमुच्यते ॥
वान्ति यान्त्युडवो ऽत्रेति व्योमोक्तमुडुवं बुधैः ।
पञ्चमं तच्च भूतेषु पञ्चसंख्या तदुद्भवा ॥
औडुवी सा ऽस्ति येषां च स्वरास्ते त्वौडुवा मताः ।
ते संजाता यत्र गीते तदौडुवितमुच्यते ॥
तत्संबन्धादौडुवं च पञ्चस्वरमिदं विदुः ।
क्रमादल्पाल्पतरते षाडवौडुवकारिणौ ॥
संपूर्णत्वदशायां स्तः पञ्चम्यां तु विपर्ययः ।
वचनं विधिरप्राप्ताविहाल्पत्वबहुत्वयोः ॥
परिसंख्या द्वयोः प्राप्तावेकस्यातिशयाय यत् ।
अथ प्रत्येकमेतासां जातीनां लक्ष्म कथ्यते ॥
षाड्ज्यामंशाः स्वराः पञ्च निषादर्षभवर्जिताः ।
निर्लोपात्षाडवं सो ऽत्र पूर्णत्वे काकली क्वचित् ॥
सगयोः सधयोश्चात्र संगतिर्बहुलस्तु गः ।
गांधारेंशे न नेर्लोपो मूर्च्छना धैवतादिका ॥
त्रिधा तालः पञ्चपाणिरत्र चैककलाऽऽदिकः ।
क्रमान्मार्गाश्चित्रवृत्तिदक्षिणा गीतयः पुनः ॥
मागधी संभाविता च पृथुलेति क्रमादिमाः ।
नैष्क्रामिकध्रुवायां च प्रथमे प्रेक्षणे स्मृतः ॥
विनियोगो द्वादशात्र कला अष्टलघुः कला ।

अस्यां षाड्ज्यां षड्जो न्यासः । गांधारपञ्चमावपन्यासौ । वराटी दृश्यते । अस्य प्रस्तारः—

१. सा सा सा सा पा निध पा धनि
   तं भ व ल ला ट
२. री गम गा गा सा रिग धस धा
   न य ना म्बु जा धि
३. रिग सा री गा सा सा सा सा
   कं

४. धा धा निध निसं निध पा सां सां
न ग सू नु प्र ण य

५. नी धा पा धनि री गा सा गा
के लि स मु द्र

६. सा धा धनि पा सा सा सा सा
वं

७. सा सा गा सा मा मा मा मा
स र स कृ त ति ल क

८. सा पस मा धनि निध पा गा रिग
पं का नु ले प

९. गा गा गा गा सा सा सा सा
नं

१०. धां सा री गरि सा मा मा मा
प्र ण मा मि का म

११. धा नी पा धनि री गा री सा
दे हैं ध ना न

१२. रिग सा री गा सा सा सा सा ॥ १ ॥
लं

॥ आर्षभी ॥

आर्षभ्यां तु त्रयोंशाः स्युर्निषादर्षभधैवताः ।
द्विश्रुत्योः संगतिः शेषैर्लङ्घनं पञ्चमस्य च ॥
षाडवं षड्जलोपेन सपलोपादिहौडुवम् ।
मूर्च्छना पञ्चमादिश्च तालश्चञ्चत्पुटो मतः ।
अष्टौ कला भवन्तीह विनियोगस्तु पूर्ववत् ॥

अस्यामार्षभ्यां रिषभो न्यासः । अंशा एवापन्यासाः । देशीमधुकर्यौ दृश्येते । प्रस्तारः—

१. री गा सा रिग मा रिम गा रिरि
गु ण लो च ना धि

२. री री निध निध गा रिम मा पनि
क म न न्त म म र

३. मा धा नी धा पा पा सा गा
म ज र म क्ष य
४. नी धनि री गरि सधं गरि री री
म जे यं
५. री मा गरि सधं सस रिस रिग मम
प्र ण मा मि दिव्य
६. निध पा री री रिप गरि सधं सा
म णि द् पं णा म
७. रिस रिस रिग रिग मा मा मा गरि
ल नि के तं
८. पा नी नी मग री सधं गरि गरि
भ व म मे यं ॥ २ ॥

॥ गांधारी ॥

पञ्चांशा रिधवर्जाः स्युर्गांधार्यां संगतिः पुनः ।
न्यासांशाभ्यां तदन्येषां धैवताद्दषभं व्रजेत् ॥
रिलोपनिधलोपाभ्यां षाडवौडुविते क्रमात् ।
पञ्चमः षाडवद्वेषी निसमध्यमपञ्चमाः ॥
अंशा द्विषन्त्यौडुवितं कलाः षोडश कीर्तिताः ।
मूर्च्छना धैवतादिः स्यात्तालश्चञ्चपुटो मतः ।
विनियोगो ध्रुवागाने तृतीयप्रेक्षणे भवेत् ॥

अस्यां गांधार्यां गांधारो न्यासः । षड्जपञ्चमावपन्यासौ । गांधारपञ्चमदेशीवेलावल्यो दृश्यन्ते । प्रस्तारः—

१. गा गा सा नीं सा गा गा गा
ए तं
२. गा गम पा पा धप मा निध निसं
र ज नि व धू मु ख
३. निध पनि मा मपरि गा गा गा गा
वि भ्र म दं
४. गा गम पा पा धप मा निध निसं
नि शा म य व रो रु

५. निध पनि मा मपरि मा गा मा सा
त व मु ख वि ला स
६. गा सा गा गा गा गम गा गा
व पु श्रा रु म म ल
७. गा गम पा पा धप मा निध निसं
मृ दु कि र ण
८. निध पनि मा पमरि गा गा गा गा
म मृ त भ वं
९. री गा मा पध री गा सा सा
र ज त गि रि शि ख र
१०. नीं नीं नीं नीं नीं नीं नीं नीं
म णि श क ल शं ख
११. गा गम पा पा धप मा निध निसं
व र यु व ति दं त
१२. निध पनि मा मपरि गा गा गा गा
पं क्ति नि भं
१३. नी नी पा नी गा मा गा सा
प्र ण मा मि प्र ण य
१४. गा सा गा गा गा गम गा गा
र ति क ल ह र व तु
१५. गा पा मा मा निध निसं निध पनि
दं
१६. मा परिग गा गा गा गा गा गा
श शि नं ॥ ३ ॥

॥ मध्यमा ॥

पञ्चांशा मध्यमायां स्युर्गांधारनिषादकाः ।
षड्जमध्यमबाहुल्यं गांधारो ऽल्पो ऽत्र षाडवम् ॥
गलोपान्निगलोपेन चौडुवं स्यात्कलाऽष्टकम् ।
ऋषभादिर्मूर्च्छना स्यात्तालश्चश्चत्पुटो मतः ।
विनियोगो ध्रुवागाने द्वितीयप्रेक्षणे भवेत् ॥

अस्यां मध्यमायां मध्यमो न्यासः । अंशा एवापन्यासाः । चोक्ष-षाडवदेश्यन्धाल्यो दृश्यन्ते । प्रस्तारः—

१. मा मा मा मा पा धनि नी धप
पा तु भ व मू
२. मा पम मा सा मा गा री री
र्ध जा न नं
३. पा मा रिम गम मा मा मा मा
कि री ट
४. मा निध निसं निध पम पध मा मा
म णि द् र्प णं
५. नीं नीं रीं री नीं री री पा
गौ री क र प
६. नीं मप मा मा सा सा सा सा
ल्ल वां गु लि सु
७. गां नी सां गां धप सा धनि सां
ते जि तं
८. पा सां पा निधप मा मा मा मा
सु कि र णं ॥ ४ ॥

॥ पञ्चमी ॥

रिपावंशौ तु पञ्चम्यां सगमाः स्वल्पका मताः ।
रिमयोः संगतिर्गच्छेत्पूर्णत्वे गान्निषादकम् ॥
क्रमाद्वेन निगाभ्यां च षाडवौडुवता मता ।
ऋषभोंशस्त्वौडुवितं द्वेष्टयष्टौ च कला मताः ॥
मूर्च्छनाऽऽदि तु पूर्वावत्प्रेक्षणं तु तृतीयकम् ॥

अस्यां पञ्चम्यां पञ्चमो न्यासः । रिषभपञ्चमनिषादा अपन्यासाः । चोक्षपञ्चमादेश्यन्धाल्यो दृश्यन्ते । प्रस्तारः—

१. पा धनि नी नी मा नी मा पा
ह र मू र्ध जा न
२. गा गा सा सा मां मां पां पां
नं म हे श म म र

३. पां पां धां नीं नीं नीं गा सा
प ति बा हु स्तं भ
४. पा मा धा नी निध पा पा पा
न म नं तं
५. पा पा रीं रीं रीं रीं रीं रीं
प्र ण मा मि पु रु ष
६. मां निग सा सध नी नी नी नी
मु ख प द्म ल क्ष्मी
७. सां सां सां मा पा पा पा पा
ह र मं बि का प
८. धा मा धा नी पा पा पा पा
ति म जे यं ॥ ५ ॥

॥ धैवती ॥

स्तो धैवत्यां रिधावंशौ लङ्घयावारोहिणौ सपौ ।
पलोपात्षाडवं प्रोक्तमौडुवं सपलोपतः ॥
ऋषभादिर्मूर्च्छना स्यात्तालो मार्गश्च गीतयः ।
विनियोगश्च षाड्जीवत्कला द्वादश कीर्तिताः ॥
अस्यां धैवत्यां धैवतो न्यासः । रिषभमध्यमधैवता अपन्यासाः । चोक्षकैशिकदेशीसिंहल्यो दृश्यन्ते । प्रस्तारः—

१. धा धा निध पध मा मा मा मा
त रु णा म लें दु
२. धा धा निध निस सा सा सा सा
म णि भू षि ता म
३. सध धा पा मध धा निध धनि धा
ल शि रो जं
४. सा सा रिग रिग सा रिग सा सा
भु ज गा धि पै क
५. धां धां नीं पां धां पां मां मां
कुं ड ल वि ला स

६. धां धां पां मंधं धां निंधं धंनिं धां
क्ष त शो भं

७. धा धा निस निस निध पा पा पा
न ग सू नु ल क्ष्मी

८. रिग सा सा सा नीं नीं नीं नीं
दे हा र्धं मि श्रि

९. सा रिग रिग सा नीं सा धा धा
त श री रं

१०. रीं गरिं मंगं मां मां मां मां मां
प्र ण मा मि भू त

११. नी नी धा धा पा रिग सा रिग
गी तो प हा र

१२. पा धा सा मा धा नी धा धा ॥ ६ ॥
प रि तु ष्टं

॥ नैषादी ॥

नैषाद्यां निरिगा अंशा अनंशा बहुलाः स्मृताः ।
षाडवौडुवलङ्घ्याः स्युः पूर्ववद्विनियोजनम् ॥
चञ्चत्पुटः षोडशात्र कला गादिश्च मूर्च्छना ॥

अस्यां नैषाद्यां निषादो न्यासः । अंशा एवापन्यासाः । चोक्षसाधारित-देशीवेलावल्यो दृश्यन्ते । प्रस्तारः—

१. नी नी नी नी सा धा नी नी
तं सु र वं दि त

२. पा मा सा धां नीं नीं नीं नीं
म हि ष म हा सु र

३. सा सा गा गा नी नी धा नी
म थ न मु मा प तिं

४. सा सा धा नी नी नी नी नी
भो ग यु तं

५. सा सा गा गा मां मां मां मां
न ग सु त का मि नी

६. नीं पां धां पां मां मां मां मा
दि व्य वि शे ष क

७. रीं गां सां सां रीं गां नी नी
सू च क शु भ न ख

८. नी नी पा धनि नी नी नी नी
द र्प ण कं

९. सा सा गा सा मा मा मा मा
अ हि मु ख म णि ख चि

१०. मां मां मां मां नीं धां मां मां
तो ज्ज्व ल नू पु र

११. धा धा नी नी री गा मां मां
वा ल भु जं ग म

१२. मां मां पां धां नीं नीं नीं नीं
र व क लि तं

१३. पां पां नीं नीं री री री री
द्रु त म भि व्र जा मि

१४. री मा मा मा री गा सा सा
श र ण म निं दि त

१५. धा मा री गा सा धा नी नी
पा द यु ग पं क

१६. पां मां रीं गां नी नी नी नी
ज वि ला सं ॥ ७ ॥

॥ षड्जकैशिकी ॥

अंशाः स्युः षड्जकैशिक्यां षड्जगांधारपञ्चमाः ।
ऋषभे मध्यमे ऽल्पत्वं धनिषादौ मनाग्बहू ॥
चच्चत्पुटः षोडशास्यां कलाः स्युर्विनियोजनम् ।
प्रावेशिक्यां ध्रुवायां स्यात् प्रेक्षणं तु द्वितीयकम् ॥

अस्यां षड्जकैशिक्यां न्यासो गांधारः षड्जनिषादपञ्चमा अपन्यासाः । प्रागुक्ता गांधारपञ्चमहिन्दोलकदेशीवेलावल्यो दृश्यन्ते । प्रस्तारः—

१. सा सा मां पां गरि मग मा मा
दे
२. मा मा मा मा सां सां सां सां
वं
३. धा धा पा पा धा धा री रिम
अ स क ल श शि ति ल
४. री री नीं नीं नीं नीं नीं नीं
कं
५. धा धा पा धनि मा मा पा पा
द्वि र द ग तिं
६. धा धा पा धनि धा धा पा पा
नि पु ण म तिं
७. सा सा सा सा सा सा सा सा
मु ग्ध मु खां बु
८. धा धा पा धा धनि धा धा धा
रु ह दि व्य कां तिं
९. सा सा सा रिग सा रिग धा धा
ह र मं बु दो द
१०. मा धा पा पा धा धा नी नी
धि नि ना दं
११. री री गा सा सां सां सां गां
अ च ल व र सू नु
१२. धां रिसं रीं संरिं रीं सां सां सां
दे हा धं मि श्रि
१३. सा सरि री सरि री सा सा सा
त श री रं
१४. मा मा मा मा निध पध मा मा
प्र ण मा मि तम हं
१५. नी नी पा पम पा पम पध रिग
अ नु प म मु ख क म

१६. गा गा गा गा गा गा गा गा
लं ॥ ८ ॥

॥ षड्जोदीच्यवा ॥

अंशाः समनिधाः षड्जोदीच्यवायां प्रकीर्तिताः ।
मिथश्च संगतास्ते स्युर्मन्द्रगांधारभूरिता ॥
षड्जर्षभौ भूरितारौ रिलोपात्षाडवं मतम् ।
औडुवं रिपलोपेन धैवतेंशे न षाडवम् ॥
षाड्जीवद्गीतितालादि गांधारादिश्च मूर्च्छना ।
द्वितीये प्रेक्षणे गाने ध्रुवायां विनियोजनम् ॥

अस्यां मध्यमो न्यासः । षड्जधैवतावपन्यासौ । प्रस्तारः

१. सा सा सा सा मां मां गां गां
शै ले

२. गा मा पा मा गा मा मा धा
श सू नु

३. सा सा मा गा पा पा नी धा
शै ले श सू नु

४. धा नी सा सा धा नी पा मा
प्र ण य प्र सं ग

५. गां सा सा सा सा सा सा गां
स वि लां स खे ल

६. धा धा पा धा पा नी धा धा
न वि नो दं

७. सा गां गां गां गां गां सा सा
अ धि क

८. नी धा पा धा पा धा धा धा
मु खें दु

९. सा॑ सा॑ मा गा पा पा नी धा
अ धि क मु खें दु

१०. धा नी सा॑ सा॑ धा नी पा मा
न य नं न मा मि

११. गां सा सा सा सा सा सा गां
दे वा सु रे श

१२. धा धा पा धा मा मा मा मा
त व रु चि रं ॥ ९ ॥

शैलेऽक्षराभ्यां प्रथमा द्वितीया तु शसूनुना ।
तैः पञ्चभिस्तृतीया स्यात्सप्तमी त्वधिकाक्षरैः ।
मुखेन्दुना ऽष्टमी त्वस्यां षड्भिस्तैर्नवमी कला ॥

॥ षड्जमध्यमा ॥

अंशाः सप्त स्वराः षड्जमध्यमायां मिथश्च ते ।
संगच्छन्ते निरल्पोंशाङ्गादृते वादितां विना ॥
निलोपे निगलोपे च षाडवौडुविते मते ।
षाडवौडुवयोः स्यातां द्विश्रुती तु विरोधिनौ
गीतितालकलाऽऽदीनि षाड्जीवन्मूर्च्छना पुनः ।
मध्यमादिरिह ज्ञेया पूर्ववद्विनियोजनम् ॥

अस्यां षड्जमध्यमौ न्यासौ । सप्त स्वरा अपन्यासाः । प्रस्तारः

१. मा गा सग पा धप मा निध निम
र ज नि व धू मु ख

२. मा मा सा रिग मग निध पध पा
वि ला स लो च

३. मा गा री गा मा मा सा सा
नं

४. मा मगम मा मा निध पध पम गमम
प्र वि क सि त कु मु द

५. धा पध परि रिग गम रिग सधस सा
द ल फे न सं नि

६. निध सा री मगम मा मा मा मा
भं

७. मां मां मंगंमं मंधं धंपं पंधं पंमं गंमंगं
का मि ज न न य न

८. धा पध परि रिग मग रिग सधस सा
हृ द् या भि नं दि

९. मा मा धनि धस धप मप पा पा
नं

१०. मां मंगमं मां निधं पंधं पंमंगं गां मां
प्र ण मा मि दे वं

११. धा पध परि रिग मग रिग सधस सा
कु मु दा धि वा सि

१२. निध सा री मगम मा मा मा मा
नं ॥ १० ॥

॥ गांधारोदीच्यवा ॥

गांधारोदीच्यवायां तु द्वावंशौ षड्जमध्यमौ ।
रिलोपात्षाडवं ज्ञेयं पूर्णत्वेंशेतराल्पता ॥
अल्पा निधपगांधारा षाडवत्वे प्रकीर्तिताः ।
रिधयोः संगतिर्ज्ञेया धैवतादिश्च मूर्च्छना ॥
तालश्चचत्पुटो ज्ञेयः कलाः षोडश कीर्तिताः ।
विनियोगो ध्रुवागाने चतुर्थप्रेक्षणे मतः ॥

अस्यां मध्यमो न्यासः । षड्जधैवतावपन्यासौ । प्रस्तारः—

१. सा सा पा मा पा धप पा मा
सौ

२. धा पा मा मा सा सा सा सा
म्य

३. धा नी सा सा मा मा पा पा
गौ री मु खां बु

४. नी नी नी नी नी नी नी नी
रु हृ दि व्य ति ल क

५. मा मा धा निस नी नी नी नी
प रि चुं बि ता र्चि

६. मा पा मा परिग गा गा सा सा
त मु पा दं

७. गा मग पा पध मा धनि पा पा
प्र वि क सि त हे म

८. री गा सा सध नी नी धा धा
क म ल नि भं

९. गा रिग सा सनि गा रिग सा सा
अ ति रु चि र कां ति

१०. सा सा सा मा मनि धनि नी नी
न ख द र्पं णा म

११. मा पा मा परिग गा गा सा सा
ल नि के तं

१२. गा सा गा सा मा पा मा परिग
म न सि ज श री र

१३. गा मा गा सा गा गा गा सा
ता ड नं

१४. नी नी पा धा नी गा गा गा
प्र ण मा मि गौ री

१५. नी नी धा पा धा पा मा पा
च र ण यु ग म नु प

१६. धा पा सा सा मा मा मा मा
मं ॥ ११ ॥

॥ रक्तगांधारी ॥

अंशाः स्यू रक्तगांधार्यां पञ्च धर्षभवर्जिताः ।
रिमतिक्रम्य सगयोः कार्ये संनिधिमेलने ॥
रिलोपरिधलोपाभ्यां षाडवौडुवमिष्यते ।
बहुत्वं निधयोरंशः पञ्चमो द्वेष्टि षाडवम् ॥
द्विषन्त्यौडुवितं षड्जनिमपाः संगतौ सगौ ।
पञ्चपाण्यादि षाड्जीवदृषभादिस्तु मूर्च्छना ।
तृतीयप्रेक्षणगतध्रुवायां विनियोजनम् ॥

अस्यां गांधारो न्यासः । मध्यमो ऽपन्यासः । प्रस्तारः—

१. पा नी सा सा गा सा पा नी
तं बा ल र ज नि
२. सां सां पा पा मा मा गा गा
क र ति ल क भू ष
३. मा पा धा पा मा पा धप मग
ण वि भू
४. मा मा मा मा मा मा मा मा
तिं
५. धां नीं पां मंपं धां नीं पां पां

६. मां पां मां धंनिं पां पां पां पां

७. री गा मा पा पा पा मा पा
प्र ण मा मि गौ री
८. रीं गां मां पां पां पां मां पां
व द ना र विं
९. पा पा पा पा पा पा पा पा
द
१०. री गा सा सा री गा गा गा
प्री ति क रं
११. गां गां पां धंमं धां निंधं पा पा

१२. गां पां मां पंरिंगं गां गां गां गां ॥ १२ ॥

॥ कैशिकी ॥

कैशिक्यामृषभान्येंशा निधावंशौ यदा तदा ।
न्यासः पञ्चम एव स्यादन्यदा द्विश्रुती मतौ ॥
अन्ये तु निगपान्न्यासान्निधयोरंशयोर्विदुः ।
रिलोपरिधलोपेन षाडवौडुवितं मतम् ॥
रिरल्पो निपबाहुल्यमंशानां संगतिर्मिथः ।
षाडवौडुविते द्विष्टः क्रमात्पञ्चमधैवतौ ॥

षाड्जीवत्पञ्चपाण्यादि गांधारादिस्तु मूर्च्छना ।
पञ्चमप्रेक्षणगतध्रुवायां विनियोजनम् ॥

अस्यां गांधारपञ्चमनिषादा न्यासाः । रिवर्ज्याः षट् सप्त वा स्वरा अपन्यासाः । प्रस्तारः—

१. पा धनि पा धनि गा गा गा गा
के ली ह त

२. पा पा मा निध निध पा पा पा
का म त नु

३. धा नी सां सा री री री री
वि भ्र म वि ला सं

४. सा सा सा री गा मा मा मा
ति ल क यु तं

५. मां धां नीं धां मां धां मां पां
मू र्धो ध्वे बा ल

६. गा री सा धनि री री री री
सो म नि भ

७. गा री सा सा धा धा मा मा
मु ख क म लं

८. गा गा गा मा मा निधनि नी नी
अ स म हा ट

९. गा गा नी नी गा गा गा गा
क स रो जं

१०. गां गां नीं नीं निंधं पां पां पां
हृ दि सु ख दं

११. मां पां मां पां पां पां मां मां
प्र ण मा मि लो च

१२. सां मां गां निंधंनिं नीं नीं मां गां
न वि शे षं ॥ १३ ॥

॥ मध्यमोदीच्यवा ॥

पञ्चमांशा सदा पूर्णा मध्यमोदीच्यवा मता ।
लक्ष्म शेषं विजानीयाद् गांधारोदीच्यवागतम् ॥
मध्यमादिर्मूर्च्छना स्यात्तालश्चच्चत्पुटो मतः ।
चतुर्थस्य प्रेक्षणस्य ध्रुवायां विनियोजनम् ॥
अस्यां मध्यमो न्यासः । प्रस्तार:—

१. पा धनि नी नी मा पा नी पा
दे हा धं रू प

२. री री री गा सा रिग गा गा
म ति कां ति म म ल

३. नी नी नी नी नी नी नी नी
म म लें दु कुं द

४. नी नी धप मा निध निध पा पा
कु मु द नि भं

५. पा पा री री री री री री
चा मी क रां बु

६. मा रिग सा सधं नीं नीं नीं नीं
रु ह् दि व्य कां ति

७. मा पा नी सा पा पा गा गा
प्र व र ग ण पू जि

८. गा पां मां निधं नीं नीं सा सा
त म जे यं

९. पां पां मां धंनि पां पां पां पां
सु रा भि ष्टु त म नि ल

१०. मां पां मां रिग गा गा गा गा
म नो ज व मं बु

११. गा पा मा पा नी नी नी नी
दो द धि नि ना द

१२. मा पा मा परिग गा गा गा गा
म ति हा सं

१३. गां गां गां गां मां निंधं नीं नीं
शि वं शां त म सु र
१४. नी नी धप मा निध निध पा पा
च मू म थ नं
१५. रीं गां सां सां मां निंधनिं नीं नीं
वं दे त्रै लो क्य
१६. नीं नीं धां पां धां पां मां मां
न त च र णं ॥ १४ ॥

॥ कार्मारवी ॥

कार्मारव्यां भवन्त्यंशा निषादरिपधैवताः ।
बहवोऽन्तरमार्गत्वादनंशाः परिकीर्तिताः ॥
गांधारोऽत्यन्तबहुलः सर्वांशस्वरसंगतिः ।
चच्चत्पुटः षोडशात्र कलाः षड्जादिमूर्च्छना ।
पञ्चमस्य प्रेक्षणस्य ध्रुवायां विनियोजनम् ॥

अस्यां पञ्चमो न्यासः । अंशा एवापन्यासाः । प्रस्तारः—

१. री री री री री री री री
तं स्था णु ल लि त
२. मा गा सा गा सा नी नी नी
वा मां ग स क्त
३. नीं मां नीं मां पां पां गा गा
म ति ते जः प्र स र
४. गा पा मा पा नी नी नी नी
सौ धां शु कां ति
५. रीं गां सां नीं रीं गां रीं मां
फ णि प ति मु खं
६. री गा री सा नी धनि पा पा
उ रो वि पु ल सा ग
७. मां पां मां पांरिंगं गा गा गा गा
र नि के तं

८. री री गा सम मा मा पा पा
सि त पं न गें द्र

९. मा पा मा गरिग गा गा गा गा
म ति कां तं

१०. धा नी पा मा धा नी सा सा
ष ण्मु ख वि नो द

११. नी नी नी नी नी नी नी नी
क र प ल्ल वां गु

१२. मां मां धां नीं सनिनि धा पा पा
लि वि ला स की ल

१३. मा पा मा गरिग गा गा गा गा
न वि नो दं

१४. नी नी पा धनि गा गा गा गा
प्र ण मा मि दे व

१५. सा रीं गा सा नीं नीं नीं नीं
य ज्ञो प वी त

१६. नीं नीं धा धा पा पा पा पा
कं                                   ॥ १५ ॥

॥ गांधारपञ्चमी ॥

अंशो गांधारपञ्चम्यां पञ्चमः संगतिः पुनः ।
कर्तव्या ऽत्रापि गांधारीपञ्चम्योरिव भूरिभिः ॥
चच्चत्पुटः षोडशात्र कला गादिश्च मूर्च्छना ।
तुर्यप्रेक्षणसंबन्धि ध्रुवागाने नियोजनम् ॥

अस्यां गांधारो न्यासः । ऋषभपञ्चमावपन्यासौ । प्रस्तारः—

१. पा मप मध नी धप मा धा नी
कां

२. सनिनि धा पा पा पा पा पा पा
तं

३. धा नी सा सा मा मा पा पा
वा मै क दे श

४. नी नी नी नी नी नी नी नी
प्रें खो ल मा न

५. नी नी धप मा निध निध पा पा
क म ल नि भं

६. पा पा री री री री री री
व र सु र भि कु सु म

७. मा रिग सा सध नी नी नी नी
गं धा धि वा सि

८. नी नी सां रिंसं रीं रीं रीं रीं
त म नो ज्ञ

९. नी गा सा निग सा नीं नीं नीं
न ग रा ज सू नु

१०. नीं मां नीं मां पां पां गा गा
र ति रा ग र भ स

११. गा पां मां पां नीं नीं नीं नीं
के ली कु च प्र

१२. मा पा मा परिग गा गा गा गा
ह ली लं तं

१३. नीं नीं पां धां नीं गा गा गा
प्र ण मा मि दे वं

१४. नीं नीं नीं नीं नीं नीं नीं नीं
चं द्रा र्ध मं डि

१५. मां मां धां नीं सनिनि धा पा पा
त वि ला सकी ल

१६. मा पा मा परिग गा गा गा गा
न वि नो दं ॥ १६ ॥

॥ आन्ध्री ॥

आन्ध्र्यामंशा निरिगपा रिगयोर्निधयोस्तथा ।
संगतिर्न्यासपर्यन्तमंशानुक्रमतो व्रजेत् ॥

षाडवं षड्जलोपेन मध्यमादिश्च मूर्च्छना ।
पूर्ववत्तु कलातालविनियोगाः प्रकीर्तिताः ॥

अस्यामान्ध्र्यां गांधारो न्यासः । अंशा एवापन्यासाः । प्रस्तारः—

१. गा री री री री री री री
त रु णें दु कु सु म

२. री गा री गा री री री री
ख चि त ज टं

३. री री गा गा री री मा मा
त्रि दि व न दी स लि ल

४. री गा सा धनि नीं नीं नीं नीं
धौ त मु खं

५. नीं री नीं री धंनिं धंनिं पां पां
न ग सू नु प्र ण यं

६. मां पां मां रिग गा गा गा गा
वें द नि धिं

७. री री गा सस मा मा पा पा
प रि णा हि तु हि न

८. मां पां मां रिग गा गा गा गा
शै ल गृ हं

९. धां नीं गा गा गा गा गा गा
अ मृ त भ वं

१०. पा पा मा रिग गा गा गा गा
गु ण र हि तं

११. नी नी नी नी री री री री
त म व नि र वि श शि

१२. री री गा नी सा सा नी नी
ज्व ल न ज ल प व न

१३. पा पा मा रिंग गा गा गा गा
ग ग न त नुं

१४. रीं रीं गा समं मा मा पा पा
शरणं व्रजामि
१५. मा मा नीं नीं सा रीं गा पा
शुभमतिकृत निल
१६. रिग गा गा गा गा गा गा गा
यं ॥ १७ ॥

॥ नन्दयन्ती ॥

नन्दयन्त्यां पञ्चमोंशो गांधारस्तु ग्रहः स्मृतः ।
कैश्चित्तु पञ्चमः प्रोक्तो ग्रहो ऽस्यां गीतवेदिभिः ॥
मन्द्रर्षभस्य बाहुल्यं षाडवं षड्जलोपतः ।
हृष्यका मूर्च्छना तालः पूर्ववद् द्विगुणाः कलाः ।
विनियोगो ध्रुवागाने प्रथमप्रेक्षणे भवेत् ॥

अस्यां गांधारो न्यासः । मध्यमपञ्चमावपन्यासौ । प्रस्तारः-

१. गा गा गा गा पा पा धप मा
सौ
२. धा धा धा धा धा नी सनिनि धा

३. पां पां पां पां पां पां पां पां
म्यं
४. धा नी मा पा गां गां गां गां
वे दां ग वे द
५. मा री गा गा गा गा गा गा
करकमलयो निं
६. मा मा पा पा धा निध पा पा
त मो र जो वि व
७. धा नी मा पा गा गा गा गा
र्जि तं
८. गम पा पा पा मा पा गा गा
हरं

९. धा नी मा पा गा गा गा गा
भ व ह र क म ल गृ
१०. मा मा मा मा मा मा मा मा
हं
११. री गा मा पा पम पा पा नी
शि वं शां तं सं नि
१२. रीं रीं रीं रीं पां पां मां मां
वे श न म पू वं
१३. धां नीं सनिंनिं धां पां पां पां पां
भू ष ण ली लं
१४. धां नीं मां पां गां गां गां गां
उ र गे श भो ग
१५. गा पा पा पा धा मा गा मा
भा सु र शु भ पृ थु
१६. धा धा नी धा पा पा पा पा
लं
१७. री गा मा पा पम पा पा नी
अ च ल प ति सू नु
१८. रीं रीं रीं रीं पां पां पां पां
क र पं क जा म
१९. पा पा पा पा धा मा मा मा
ल वि ला स की ल
२०. नीं पां गां गंमं गां गां गां गां
न वि नो दं
२१. रीं रीं गां गां मां मां मां मां
स्फ टि क म णि र ज त
२२. नी पा नी मा नी धा पा पा
सि त न व दु कू ल
२३. सां सां धनि धा पा पा पा पा
क्षी रोद सा ग

२४. मा पा मा परिग गा गा सा सा
र नि का शं
२५. री री गा गा मा मा पा पा
अ ज शि रः क पा ल.
२६. री री री गा मा रिग मा मा
पृ थु भा ज नं
२७. मा नी पा नी गा गा गा गा
वं दे सु ख दं
२८. मा मा पा पा धा धनि निध मा
ह र दे ह म म ल
२९. धा धा सा नी धा नी पा पा
म धु सू द न सु
३०. री री री री मा पा धा मा
ते जो धिक सु
३१. नी नी नी नी धा पा मा मा
ग ति यो
३२. मा परिग गा गा गा गा गा गा
निं ॥ १८ ॥

अनुक्ताविह तालः स्यात् त्रिधैवैककलाऽऽदिकः ।
मार्गाः क्रमाच्चित्रवृत्तिदक्षिणा गीतयः पुनः ॥
मागधी संभाविता च पृथुलेत्युदिताः क्रमात् ।
योक्ता ऽस्माभिः कलासंख्या सा दक्षिणपथस्थिता ॥
वार्त्तिके द्विगुणा ज्ञेया सैव चित्रे चतुर्गुणा ।
सर्वजातिषु जानीयादंशस्वरगतं रसम् ॥
दृश्यन्ते जन्यरागांशास्तज्ज्ञैर्जनकजातिषु ।
ब्रह्मप्रोक्तपदैः सम्यक्प्रयुक्ताः शंकरस्तुतौ ॥
अपि ब्रह्महणं पापाज्जातयः प्रपुनन्त्यमूः ।
ऋचो यजूंषि सामानि क्रियन्ते नान्यथा यथा ।
तथा सामसमुद्भूता जातयो वेदसंमताः ॥

इति श्रीराजाधिराजभोसलकुलतिलकतुलजामहाराजविरचिते
संगीतसारामृते जातिप्रकरणं
सप्तमम्

## अथ गीतिप्रकरणम् (८)

शुद्धजातिसमुद्भूतकपालान्यधुना ब्रुवे ।
रागा जनकजातीनां तत्कपालेषु संमताः ॥
षड्जो ग्रहांशापन्यासो गो न्यासो ऽतिबहू गमौ ।
अल्पा रिपनिधा लङ्घ्यो रिः कला द्वादशोदिताः ॥
यस्मिन् षाड्जीकपालं तद्गदितं मार्गवेदिभिः ।
यत्रर्षभोंशो ऽपन्यासो मो ऽन्तो गनिपधाल्पता ॥
सो ऽत्यल्पो ऽष्टकलं तत् स्यात् कपालं त्वार्षभीगतम्
मध्यमोंशग्रहन्यासापन्यासा धैवतो बहुः ॥
यत्राल्पाः सरिगा लोपाद्रिपयोरौडुवं भवेत् ।
तद्गांधारीकपालं स्यात् कलाष्टकविनिर्मितम् ॥
मध्यमोंशो निरिगपास्त्वल्पा यत्र कला नव ।
तन्मध्यमाकपालं स्यादिति निःशङ्ककीर्तितम् ॥
ऋषभांशं सग्रहं च निधषड्जगमाल्पकम् ।
कपालं पञ्चमीजातिजातमष्टकलं विदुः ॥
अत्यल्पर्षभगांधारं पन्यासं मधभूरि च ।
षाड्ज्या इव कपालं तद्धैवत्याः स्यात्कलाऽष्टकात् ॥
ग्रहांशन्यासषड्जं च रिगाल्पमतिभूरिभिः ।
निधमैरष्टकलकं स्यान्नैषादीकपालकम् ॥
इति सप्त कपालानि गायन् ब्रह्मोदितैः पदैः ।
स्वरैश्च पार्वतीकान्तस्तुतौ कल्याणभाग्भवेत् ॥

॥ इति कपाललक्षणम् ॥

यत्र ग्रहोंशो ऽपन्यासः पञ्चमो बहुलस्तु रिः ।
सो न्यासो मधगांधारास्त्वल्पास्तत्कम्बलं मतम् ॥
पञ्चमीजातिसंजातमल्पताबहुतावशात् ।
स्वराणां बहवो भेदास्तस्य पूर्वैरुदीरिताः ॥

प्रीतः कम्बलदानेन कम्बलाय वरं ददौ ।
पुरा पुरारिरद्यापि प्रीयते तैरतः शिवः ॥

॥ इति कम्बललक्षणम् ॥

कपालानां क्रमाद् ब्रूमो ब्रह्मप्रोक्तां पदावलीम् ॥

झण्टुं झण्टुम् ॥ १ ॥ कट्वाङ्गधरम् ॥ २ ॥ दंष्ट्राकरालम् ॥ ३ ॥ तडित्सदृशजिह्वम् ॥ ४ ॥ हौ हौ हौ हौ हौ हौ हौ हौ ॥ ५ ॥ बहुरूपवदनं घनघोरनादम् ॥ ६ ॥ हौ हौ हौ हौ हौ हौ हौ हौ ॥ ७ ॥ ॐ ॐ ह्रां रौं हौं हौं हौं हौं ॥ ७ ॥ नृमुण्डमण्डितम् ॥ ९ ॥ हूं हूं क ह क ह हूं हूं ॥ १० ॥ कुलविकटमुखम् ॥ ११ ॥ नमामि देवं भैरवम् ॥ १२ ॥ इति षाड्जीकपालपदानि ॥

झण्टुं झण्टुम् ॥ १ ॥ दंष्ट्राकरालम् ॥ २ ॥ उं ऐं ह्रां त्रैं हौ हौ हौ हौ ॥ ३ ॥ हौ हौ हौ ऐ हौ हौ हौ हौ ॥ ४ ॥ वरसुरभिकुसुम ॥ ५ ॥ चर्चितगात्रम् ॥ ६ ॥ कपालहस्तम् ॥ ७ ॥ नमामि देवम् ॥ ८ ॥ इत्यार्षभीकपालपदानि ॥

चलत्तरङ्ग ॥ १ ॥ भङ्गुरम अ- ॥ २ ॥ नेकरेणु ॥ ३ ॥ पिञ्जरं सु- ॥ ४ ॥ रासुरैः सुसेवितं पु- ॥ ५ ॥ नातु जाह्न- ॥ ६ ॥ वीजलं मां ॥ ७ ॥ बिन्दुभिः ॥ ८ ॥ इति गांधारीकपालपदानि ॥

शूलकपाल- ॥ १ ॥ पाणित्रिपुरविनाशि- ॥ २ ॥ शशाङ्कधारिणम् ॥ ३ ॥ त्रिनयनत्रिशूलम् ॥ ४ ॥ सततमुमया सहि- ॥ ५ ॥ तं वरदं हे हे हे हे ॥ ६ ॥ हे हे हे हे हे ॥ ७ ॥ हे हे हे हे हे ॥ ८ ॥ नौमि महादेवम् ॥ ९ ॥ इति मध्यमाकपालपदानि ॥

जय विषमनयन ॥ १ ॥ मदनतनुदहन ॥ २ ॥ वरवृषभगमन ॥ ३ ॥ पुरदहन ॥ ४ ॥ नतसकलभुवन ॥ ५ ॥ सितकमलवदन ॥ ६ ॥ भव मे भयहर ॥ ७ ॥ भव शरणम् ॥ ८ ॥ इति पञ्चमीकपालपदानि ॥

अग्निज्वालशि- ॥ १ ॥ खावलि- ॥ २ ॥ मांसशोणित- ॥ ३ ॥ भोजिनि ॥ ४ ॥ सर्वाहारि- ॥ ५ ॥ णि निर्मांसे ॥ ६ ॥ चापर्णे ॥ ७ ॥ नमोऽस्तु ते ॥ ८ ॥ इति धैवतीकपालपदानि ॥

सरसगजचर्मपटम् ॥ १ ॥ भीमभुजंगमानद्धजटम् ॥ २ ॥ कह कह हुंकृतविकृतमुखम् ॥ ३ ॥ नम तं शिवं हरमजितम् ॥ ४ ॥ चन्द्रचूड-

मजेयम् ॥ ५ ॥ कपालमण्डितमुकुटम् ॥ ६ ॥ कामदर्पविध्वंसकरम् ॥ ७ ॥
नम तं हरं परमशिवम् ॥ ८ ॥ इति नैषादीकपालपदानि ॥

वर्णाद्यलंकृता गानक्रिया पदलयान्विता ।
गीतिरित्युच्यते सा च बुधैरुक्ता चतुर्विधा ॥
मागधी प्रथमा ज्ञेया द्वितीया चार्धमागधी ।
संभाविता च पृथुलेत्येतासां लक्ष्म चक्ष्महे ॥
गीत्वा कलायामाद्यायां विलम्बितलयं पदम् ।
द्वितीयायां मध्यलयं तत्पदान्तरसंयुतम् ॥
सतृतीयपदं तं च तृतीयस्यां द्रुते लये ।
इति त्रिरावृत्तपदां मागधीं जगदुर्बुधाः ॥

यथा—मा गा मा धा । धनि धनि सनि धा । रिग रिग
दे वं । दे वं रु द्रं । देवं रुद्रं
मग रिसा ॥
वं दे ॥

पूर्वयोः पदयोरर्धे चरमे द्विर्यदोदिते ।
तदा ऽर्धमागधीं प्राहुः

यथा—मा री गा सा । सा सा धा नी । पा धा पा मा ॥
दे वं । वं रु द्रं । द्रं वं दे

द्विरावृत्तपदां परे ॥

यथा—मा मा मा मा । धा सा धा नी । पा निध मा मा ॥
दे वं । दे वं रु द्रं । रु द्रं वं दे ॥

संक्षेपितपदा भूरिगुरुः संभाविता मता ।

यथा—धा मा री गा । री गा सा सा । नी धा सा नी ।
भ क्त्या । दे वं । रु द्रं ।
धा नी मी मा ॥
वं दे ॥

भूरिलघ्वक्षरपदा पृथुला संमता सताम् ॥

यथा—मा गा री गा । सा धनि धा धा । धा सा धा नी ।
सु र न त । ह र प द । यु ग लं ।

पा निधप मा मा ॥
प्र ण म त ॥

यद्वा यथाऽक्षरे युग्मे गुर्वोः प्रथमयोर्यदा ।
एकैकं चित्रमार्गादि प्रयुज्य च गुणात्मकम् ॥
मात्राभिरष्टभिर्युक्तं दक्षिणे ध्रुवकादिभिः ।
प्रयुज्यते तदा गीतिर्मागधीत्यभिधीयते ॥
तृतीयं लघु युग्मस्य च्छगणार्धयुतं यदा ।
आद्याभ्यामन्तिमाभ्यां च मात्राभ्यां संप्रयुज्यते ॥
ततः प्लुतं सार्धगणयुक्तं कृत्वा प्रयुज्यते ।
ध्रुवकादिभिरष्टाभिर्द्विरुक्तान्त्यद्वयेन च ॥
तदाऽर्धमागधी ते द्वे तद्वत्तालान्तरेष्वपि ।
संभाविता भूरिगुरुर्द्विकले वार्त्तिके पथि ।
चतुष्कले भूरिलघुर्दक्षिणे पृथुला मता ॥

इति श्रीराजाधिराजभोसलकुलतिलकतुलजामहाराजविरचिते
संगीतसारामृते गीतिप्रकरणं
अष्टमम्

# अथ रागविवेकोचितस्वरमेलनप्रकरणम् (९)

संगीतप्रणवं स्मृत्वा नत्वा तदुपदेशकम् ।
शास्त्रप्रवर्तकांश्चैव भरतादिमुनीन्गुरून् ॥
श्रीशंभोः करुणासिन्धोः प्रसादात्तुलजाधिपः ।
सुखबोधाय सद्रागविवेकं रचयाम्यमुम् ॥
अथ स्वरगतिग्रामजात्यादिभ्यः समुत्थिताः ।
रागा बहुविधाः प्रोक्ता मुनिभिर्भरतादिभिः ॥
ते हि मेलोद्भवा रागास्तस्मिन्रक्तिपुरःसरम् ।
निरूप्यन्ते मतङ्गादिऋषिप्रोक्तप्रकारतः ॥
यो ऽयं ध्वनिविशेषः स्यात्स्वरवर्णविभूषितः ।
रञ्जको जनचित्तानां स रागः कथितो बुधैः ॥
स्वरवर्णविशिष्टेन ध्वनिभेदेन वा जनः ।
रज्यते येन कथितः स रागः संमतः सताम् ॥
अश्वकर्णादिवद्रूढो यौगिको वा ऽपि मन्थवत् ।
योगरूढश्च वा रागो ज्ञेयः पङ्कजशब्दवत् ॥

इति रागशब्दनिरुक्तिः ।

तेष्वनेकविधेष्वेषु ग्रामरागादयः पुनः ।
रागा अन्तरभाषाऽन्ता मार्गरागाः प्रकीर्तिताः ॥
अतो गन्धर्वलोकेषु प्रयोज्यास्ते व्यवस्थिताः ।
रागाङ्गाद्यास्तु चत्वारः प्रसिद्धा देशिसंज्ञकाः ॥
रागाङ्गादिनिरुक्तिश्च मतङ्गेनैव दर्शिता ।
ग्रामोत्थानां तु रागाणां छायामात्रा भवन्ति हि ॥
गीतज्ञैः कथिताः सर्वे रागाङ्गास्तेन हेतुना ।
भाषाच्छायाऽऽश्रिता येन जायन्ते सदृशाः किल ॥
भाषाङ्गास्तेन कथ्यन्ते गायकैस्तौरिकादिभिः ।
करुणोत्साहशोकादिप्रबला या क्रिया ततः ॥
जायन्ते च ततो नाम क्रियाऽङ्गास्तेन हेतुना ।
अङ्गच्छायाऽनुकारित्वादुपाङ्गांस्तान्प्रचक्षते ॥

इति रागाङ्गादिनिरुक्तिः ।

तत्र प्रसिद्धिविधुरांस्त्यक्त्वा रागांस्तु कांश्चन ॥
सर्वत्र लक्ष्यमार्गे ऽत्र संप्रति प्रचरन्ति ये।
त एव संग्रहीतव्या रागा इति विनिश्चयः ॥
त्रिषु ग्रामेषु गांधारग्रामः स्वर्गे प्रकीर्तितः।
महीतले तु द्वौ ग्रामौ स्यात्षड्जग्राम आदिमः ॥
द्वितीयो मध्यमग्रामो न त्वेतल्लक्ष्म लक्षितम्।
लक्ष्यं तु दृश्यते कापीत्यस्यासत्प्रायता गता ॥
अतो ऽत्र मध्यमग्रामजन्यरागेषु पञ्चमः।
स्वोपान्त्यश्रुतिसंस्थः सन्नैष लक्ष्येषु दृश्यते ॥
ततः स्युरखिला रागाः षड्जग्रामसमुद्भवाः।
ग्रहांशतारमन्द्रादिषाडवौडुवपूर्णताः ॥
देशीत्वात्सर्वरागेषु भवन्ति न भवन्ति च।
प्रकाशयत्येवमेव **चतुर्दण्डीप्रकाशिका** ॥
ग्रामेष्वेतेषु गांधारग्रामो नास्ति महीतले।
स्वर्गलोके परमिति सर्वेषामेव संमतम् ॥
अस्माभिर्मध्यमग्रामो ऽप्यसत्प्राय इतीर्यते।
तथा हि मध्यमग्रामे त्रिश्रुतिः पञ्चमः खलु ॥
वरालीमध्यमो जातः स पुनर्लक्ष्यमार्गतः।
मध्यमादिप्रभृतिषु मध्यमग्रामजन्मसु ॥
रागेषु दृश्यते चैव वरालीमध्यमस्ततः।
अयुक्तो मध्यमग्रामो लक्ष्यमार्गविरोधतः ॥
एक एव ततः षड्जग्राम इत्यवधार्यताम्।
षड्जग्रामोद्भवा रागा इत्यनेन निरूपितम् ॥
तदुक्तं **विट्ठलीये**ऽपि ग्रामैकत्वसमर्थनम्।
स्वराणां निचयो ग्रामो मूर्च्छनाऽऽदिसमाश्रितः ॥
भरतेनोदिते शास्त्रे ग्रामौ द्वौ षड्जमध्यमौ।
षड्जग्रामः पञ्चमे तु सप्तदश्यां श्रुतौ स्थिते ॥
स्वरे ऽस्मिन्पञ्चमे किं तु षोडशीं श्रुतिमाश्रिते।
तथैव मध्यमग्रामः सो ऽत्र रागे न दृश्यते ॥

षड्जग्रामाश्रितान्रागान्सर्वे गायन्ति गायकाः ।
तस्मान्मुख्यतमः षड्जग्राम एव न मध्यमः ॥

इति ॥

गानादौ गृह्यते येन स्वरेण तुलितो ध्वनिः ।
स षड्जः श्रुतिशब्देन लोक उद्घुष्यते जनैः ॥
स्वरो धर्तव्य इत्युक्ते निखिलोत्तरगायनैः ।
ध्रियते यः स्वरः स स्यात्षड्ज एव न चापरः ॥
तादृक्षड्जप्रधानत्वाद् ग्रामोऽयं हि प्रशस्यते ।
स्वरमेलोद्भवा रागाः कथ्यन्ते लक्ष्यवेदिभिः ॥
कथं षड्जग्रामजन्या रागा इति भवन्मतम् ।
इति चेदुच्यते षड्जग्रामेणैव समार्थकः ॥
घटकुम्भादिवन्मेलशब्दो लोके प्रदृश्यते ।
तस्मात्कश्चित्स्वरग्रामः स्वरमेल इतीर्यते ॥
षड्जप्रधानको ग्रामः षड्जग्रामः प्रकीर्तितः ।
व्युत्पन्ना ये मतङ्गाद्यै रागास्ते दशलक्षणाः ॥
भवन्ति तल्लक्षणानि व्याख्यातानि च तैर्यथा ।
तथैव तानि लिख्यन्ते यथावदनुपूर्वशः ॥
ग्रहांशतारमन्द्राश्च न्यासापन्यासकौ तथा ।
अपि संन्यासविन्यासौ बहुत्वं चाल्पता तथा ॥
लक्षणानि दशैतानि रागाणां मुनयोऽब्रुवन् ।
दशानामपि चैतेषां क्रमाल्लक्षणमुच्यते ॥
येनादौ गीयते गीतं स्वरेण स भवेद् ग्रहः ।
बहुशो गीयते येन स्वरेणांशः स कथ्यते ॥
अंशस्वरोऽप्यसावेव जीवस्वर इति स्मृतः ।
नीचैःस्वरेण यद्गानं स मन्द्रस्वर उच्यते ॥
उच्चैःस्वरेण यद्गानं स तारस्वर उच्यते ।
न्यासस्वरः स कथितो येन गीतं समाप्यते ॥
अवान्तरसमाप्तिं यो रागस्य वितनोति सः ।
अपन्यासः स्मृतो न्यासस्त्वात्यन्तिकसमाप्तिकृत् ॥

इति भेदो भवेन्न्यासापन्यासस्वरयोर्द्वयोः ।
संन्यासो नाम गीताद्यखण्डभागसमाप्तिकृत् ॥
यो गीतिखण्डाद्यवयवान्ते तिष्ठति स स्वरः ।
विन्यास एतौ संन्यासविन्यासौ भरतादिभिः ॥
अन्तर्भूतावपन्यासस्वर एवेति कीर्तितौ ।
अलङ्घनं तथा ऽभ्यासो बहुत्वं द्विविधं मतम् ॥
स्वरस्यास्पर्शनं यत्तल्लङ्घनं परिकीर्तितम् ।
साकल्येन स्वरस्पर्शस्त्वलङ्घनमिति स्मृतम् ॥
यदेकस्य स्वरस्यैव नैरन्तर्येण वा ऽथ वा ।
व्यवधानेन भूयो ऽपि भूयो ऽप्युच्चारणं हि तत् ॥
अभ्यास इति शंसन्ति बहुत्वं द्विविधं ततः ।
अल्पत्वं च द्विधा प्रोक्तमनभ्यासाच्च लङ्घनात् ॥
पूर्वोक्ताभ्यासराहित्यमनभ्यासः प्रकीर्तितः ।
पूर्वोक्तालङ्घनाभावो लङ्घनं परिकीर्तितम् ॥
लक्षणानि दशाप्येवं लक्षितानि मया स्फुटम् ।
प्रत्येकमथ रागाणां मेलना ऽऽदौ निरूप्यते ॥
रागाः सम्यङ् निरूप्यन्त उदाहरणपूर्वकम् ।
मेलज्ञानं विना मेलजन्यं ज्ञातुं न शक्यते ॥
तस्मात्तन्मेलबोधार्थं तत्स्वरूपं निरूप्यते ।
षड्ज आद्यस्तदुपरि चत्वारः क्रमशः स्वराः ॥
ऋषभाख्यानकाश्चापि गांधाराख्यानकाश्च ते ।
आद्यस्तत्र न गांधारश्चतुर्थ ऋषभो न हि ॥
ऋषभावपि गांधारौ द्वितीयकतृतीयकौ ।
प्रथमादित्रयं ह्यत्र भवेदृषभसंज्ञकम् ॥
द्वितीयादित्रयं चात्र भवेद्गांधारसंज्ञितम् ॥

नन्वेवं षड्जोपरि विद्यमानेषु चतुर्षु स्वरेषु प्रथम ऋषभ एव न गांधारः, चतुर्थस्तु गांधार एव नर्षभः, मध्यगतौ द्वावृषभौ गांधारावपि भवत इति यदुक्तं तन्न संगच्छते, प्रथमस्यर्षभत्वसंभवे ऽपि चतुर्थस्य गांधारत्वसंभवे ऽपि मध्यगतयोर्द्वयोः स्वरयोर्ऋषभत्वगांन्धारत्वे विरुद्ध-धर्मावेकैकस्य न संभवतो विरुद्धधर्मयोरेकत्र समावेशायोगादिति चेत्,

सत्यम् ; यद्यपि निरपेक्षयोर्विरुद्धयोर्धर्मयोरेकत्र समावेशायोगः, तथा ऽपि विरुद्धयोरपि सापेक्षयोर्धर्मयोरेकत्र समावेशः संगच्छत एव, एकमातृप्रसूतानां भ्रातॄणां चतुर्णां मध्यगतयोर्द्वयोर्ज्येष्ठकनिष्ठापेक्षया ज्येष्ठत्वकनिष्ठत्वरूपविरुद्धधर्माविति न दोषः । अत एषु चतुर्षु स्वरेषु मुखारिश्रीरागनाटाख्यलक्ष्यानुरोधेन प्रथमद्वितीयौ वा शुद्धर्षभशुद्धगांधारौ, द्वितीयतृतीयौ वा पञ्चश्रुतिरिषभसाधारणगांधारौ, तृतीयचतुर्थौ वा षट्श्रुतिरिषभान्तरगांधारावित्यृषभगांधारावन्यतरौ स्वरौ नियमेन संग्राह्यौ । तत्रर्षभः पूर्वभावी गांधारस्तदनन्तरभाव्येव । एवमुक्ताः शुद्धर्षभाद्यो ऽन्तरगांधारान्ताश्चत्वारः स्वरा वीणायां मेरोः पुरस्ताच्चतसृषु सारिकासु स्पष्टमुपलभ्यन्ते । तत ऊर्ध्वं पञ्चमे पर्वणि शुद्धमध्यमः, षष्ठे पर्वणि जायमानः स्वरश्च्युतपञ्चममध्यम इति **स्वरमेलकलानिधि**कारश्च्युतषड्जच्युतमध्यमयोर्निषादत्वगांधारत्वव्यवहारबलाच्च्युतषड्जनिषादच्युतमध्यमगांधारसंज्ञाकरणवदस्यापि च्युतपञ्चममध्यमसंज्ञां कृतवान् **चतुर्दण्डीप्रकाशिका**कारस्त्वेनं लक्ष्यज्ञव्यवहारानुरोधेन वराळीमध्यमसंज्ञयैव व्यवहृतवान् । अस्माकं तु मध्यमग्रामविभाजकपञ्चमस्य स्वोपान्त्यश्रुतिस्थस्यैव षड्जग्रामे शास्त्रे विकृतत्वकथनाच्छास्त्रानुरोधेन **विकृतपञ्चममध्यम** इति व्यवहर्तुमुचितमिति प्रतिभाति । मध्यमग्रामजन्यरागेषु मध्यमादितोडिप्रभृतिषु तादृशपञ्चमप्रयोगादर्शनात्षड्जग्राम एव मध्यमादिप्रभृतिलक्ष्येषु स्वचतुर्थश्रुतिस्थितपञ्चमस्यैव प्रयोगदर्शनाद्विकृतपञ्चममध्यम इत्येव व्यवहर्तुमुचितम् । एवं विकृतपञ्चममध्यमे सिद्धे ऽनयोः शुद्धमध्यमविकृतपञ्चममध्यमयोरन्यतरो नियमेन संग्राह्यः । ततः सप्तमे पर्वणि शुद्धपञ्चमो निष्पद्यते । अयमेकः संग्राह्यः ।

षड्जस्वरस्य पुरतश्चत्वारः स्युः स्वरा यथा ।
पञ्चमस्यापि पुरतश्चत्वारः स्युः स्वरास्तथा ॥
धैवताख्या निषादाख्याः प्रथमाद्यास्तु धैवताः ।
द्वितीयाद्या निषादाः स्युर्मुखार्यादिषु तु त्रिषु ॥
रागेष्वाद्यौ धनी शुद्धौ द्वितीयौ तु धनी इमौ ।
पञ्चश्रुतिर्धैवतश्च कैशिक्याख्यनिषादकः ॥
तृतीयौ षट्श्रुतिर्धश्च काकल्याख्यनिषादकः ।
त्रिष्वेषु युगलेष्वन्यतरत्संग्राह्यमीरितम् ॥

स्वरेषु द्वादशस्वेषु तत्तद्रागोपयोगतः ।
तत्तत्स्वरसमूहात्मा मेल इत्येवमीरितः ॥
विशेषसंज्ञया सम्यक्संज्ञिता ये स्वराः पुरा ।
त एते ऽप्यत्र विज्ञेयास्तद्विशेषपुरःसरम् ॥
स्वराः स्युः श्रुतिनिष्पन्नाः श्रुतिन्यूनाधिकत्वतः ।
एते बहुविधाः शुद्धा विकृता व्यावहारिकाः ॥
इति त्रिधा निगद्यन्ते तान्ब्रूमो ऽत्र विशेषतः ।
षड्जाद्याः शुद्धशब्दाद्याः स्वराः शुद्धा इतीरिताः ॥
शुद्धषड्जस्तथा शुद्धर्षभ इत्यादिनामभिः ।
अत्रैते व्यवहर्तव्या विकृतास्तत्तदाख्यया ॥
ताभिस्ते ऽत्र निरूप्यन्ते क्रमशो विकृतस्वराः ।
साधारणाख्यगांधारो ऽन्तरगांधार एव च ॥
पञ्चमोपान्त्यश्रुतौ विकृतपञ्चममध्यमः ।
कैशिक्याख्यनिषादश्च काकल्याख्यनिषादकः ॥
पञ्चैते विकृताः शुद्धैः स्वरैर्द्वादश कीर्तिताः ।
विहाय स्वस्वसंज्ञां ये स्वरा अन्यान्यसंज्ञकाः ॥
तेषां नामान्तराण्यत्र विहितानीह तद्यथा ।
शुद्धगांधार एवायं पञ्चश्रुत्यृषभाह्वयः ॥
साधारणाख्यगांधारः षट्श्रुत्यृषभसंज्ञकः ।
तथा शुद्धनिषादो ऽपि स्यात्पञ्चश्रुतिधैवतः ॥
स्यात्कैशिकनिषादो ऽपि तथा षट्श्रुतिधैवतः ।
लक्ष्यानुसारतस्त्वेतल्लौकिकं सुखबोधकम् ॥
तदेतत्स्वरसंघातरूपा मेला निरूपिताः ।
अथ मेलोद्भवा रागा निरूप्यन्ते यथाक्रमम् ॥
भेदा बहुविधास्तत्र द्विसप्ततिरिति स्फुटम् ।
निरूपयति तद्भेदांश्चतुर्दण्डीप्रकाशिका ॥

मेलनभेदानिति वा ।

एकोनविंशतिस्तत्र तेनैव समुदाहृताः ।
ते प्रस्तारत उन्नेया द्विसप्ततिरुपायतः ॥

इत्येवं विविधा मेलाः प्रस्तारपरिभाषया ।
उन्नीतास्तेन तत्रेति त्यक्त्वा तानप्रसिद्धकान् ॥
तत्तद्देशप्रसिद्धेन रागनाम्ना विशेषतः ।
प्रसिद्धाः कतिचिन्मेला उद्दिश्यन्ते मया क्रमात् ॥
अत्र सर्वेषु रागेषु श्रीरागश्चोत्तमोत्तमः ।

तदुक्तं सोमेश्वरमते—

'शिवशक्तिसमायोगाद्रागाणां संभवो भवेत् ॥
पञ्चास्यात्पञ्च रागाः स्युः षष्ठस्तु गिरिजामुखात् ।
सद्योवक्त्रात्तु श्रीरागो वामदेवाद्वसन्तकः ॥
अघोराद्भैरवो जातस्तत्पुरुषात्तु पञ्चमः ।
ईशानाख्यान्मेघरागो नाट्यारम्भे शिवादभूत् ॥
गिरिजाया मुखाल्लास्ये नटनारायणो भवेत् ।

इति परमेश्वरेण देवीं प्रत्युपदेशे स्वसद्योजातमुखोत्पन्नत्वेन श्रीरागस्याति-प्रशस्तत्वादादौ श्रीरागमेलोद्देशः ।

तत्र श्रीरागमेलोऽथ शुद्धनाट्याश्च मेलकः ॥
ततो मालवगौलस्य वेलावल्याश्च मेलकः ।
वरालिमेलो रामक्रीरागमेलस्ततः परम् ॥
शंकराभरणाख्यश्च मेलः स्यात्तदनन्तरम् ।
काम्भोजीरागमेलः स्याद्भैरव्या मेलकस्ततः ॥
मुखारिमेलको वेगवाहिन्याश्चैव मेलकः ।
सिन्धुरामक्रियामेलो हेजुज्जीमेलकस्ततः ॥
मेलः सामवराल्याख्यरागस्यातः परं ततः ।
वसन्तभैरवीमेलो भिन्नषड्जस्य मेलकः ॥
देशाक्षीरागमेलोऽथ च्छायानाटस्य मेलकः ।
कल्याणीरागमेलश्चेत्येकविंशतिरीरिताः ॥
संगीतसारामृतसंज्ञकेऽस्मि-
न्शास्त्रे मनोज्ञे तुलजेश्वरेण ।
सल्लक्ष्यलक्ष्मोभयकोविदानां
विनिर्मितो मेलमणीन्द्रहारः ॥

इति श्रीराजाधिराजभोसलकुलतिलकतुलजामहाराजविरचिते
संगीतसारामृते रागविवेकोचितस्वरमेलनप्रकरणं
नवमम्

## अथ रागविवेकप्रकरणम् (१०)

मेलोद्भवेषु रागेषु श्रीरागो ऽत्र चिरंतनैः ।
ग्रामराग इति प्रोक्तो रागाङ्गमिति कैश्चन ॥
श्रीरागो रागराजो ऽयं सर्वसंपत्प्रदायकः ।
इत्युच्यते तत्र लक्ष्म तुलजेन्द्रेण धीमता ॥
श्रीरागः परिपूर्णः सग्रहांशन्याससंयुतः ।
गेयः सायाह्नसमये ह्यथ तानविवर्जितः ॥
शुद्धाः स्युः समपाः पञ्चश्रुती रिषभधैवतौ ।
साधारणाख्यगांधारः कैशिकाख्यनिषादकः ॥
एतैः सप्तस्वरैर्युक्तो यो मेलस्तत्र चादिमः ।
श्रीरागस्तन्मेळजातानुद्दिशामीह कांश्चन ।
श्रीरागो रागराजो ऽथ रागः कन्नडगौळकः ।
देवगांधारकाख्यश्च तथा साळगभैरवी ॥
तथा स्याच्छुद्धदेशी च स्यान्माधवमनोहरी ।
मध्यमग्रामरागश्च सैन्धवी काफिकाऽऽह्वयः ॥
हुसेनीरिति संपूर्णा अत्र रागा उदाहृताः ।
श्रीरञ्जनी मालवश्रीस्तथा देवमनोहरी ॥
जयन्तसेनसंज्ञश्च मणिरङ्गुश्च षाडवाः ।
मध्यमादिस्तथा शुद्धधन्यासीत्यौडुवौ मतौ ॥
षाडवौडुवसंपूर्णा रागा अत्र निदर्शिताः ।
तुलजेन्द्रेण संगीतसारामृत इति स्फुटम् ॥

अस्य रागस्याल्पो धैवतः । आरोहावरोहमूर्च्छनातानयोरयं संदर्भो ऽत्र संगच्छते ऽयं संदर्भो न संगच्छत इत्येतन्निश्चयार्थं प्राचीनगीतप्रबन्धठायालापरूपचतुर्दण्डीसूलादिप्रभृत्युदाहरणलेखनेन स्फुटं यथा भवति तथा लिख्यते । अस्य षड्ज एव ग्रहांशो न्यासश्च । अस्योदाहरणम्—सा सनिस रिगरी- गरिस ससगारिस सारससनिप पपमारि ममपपनिनिप मपमपनिनिस

निसरिगरीगरिस सनिरिगरिसानिसगरिस गारिस सरिससपनि मपमप-निनिगस नीनीस्सा रिगरिसासनिस रिगस मनिस एतत्षड्जस्थायिनि ठाये। रिगरिस सनिप पनिप पमरिमप मपनिनिस निसरिममपपनि मपपससा स्सनिप पनिपापम मपमरिरिगरिस इति ठायप्रयोगः ।

रि मा पा नि सा पनिपमप    म प रि रि ग रि स
आ आ आ आ रे निर्धनधन    वं डु क    री स ले

इति स्वरखण्डः । रिमपनिपपमरि म रि सा सा नि प गा रि स स नि प
तो डि दां दां दें धि मि कि ट

इति प्रबन्धप्रयोगः ।

ससनिधपधनिपममप्पा इत्युद्ग्रहे ऽपि प्रयोगो ऽस्ति । अस्मिन् रागे सरिग-मेति नागच्छति, मगरिसेति नागच्छति, इत्याद्यनागच्छन्तो ऽनेकप्रयोगाः सन्ति ।

। इति श्रीरागलक्षणम् ॥

श्रीरागमेलसंजातो रागः कन्नडगौलकः ।
निन्यासांशग्रहोपेतः सप्तस्वरसमन्वितः ॥
वक्रस्वरगतिश्लिष्टो ऽसावारोहावरोहयोः ।
गेयो ऽह्नः पश्चिमे याम उत्कलानामतिप्रियः ॥
उपाङ्गमेनं शंसन्ति संगीतागमपारगाः ।

अस्योदाहरणम्—सनिपधनिसनिनिस रिगमगमपनिपमा पनिनिसा निप-निपम पमागममग गममपनिनि सनिप निपमपम मग सरिगममगसा इत्युद्ग्रहप्रयोगः । मधनिसस्स निस्सा इति षड्जस्थायिनि ठाये । ममपपपनिपमा पममग निरीगममसनिप इति ठायप्रयोगः ।

प ध नि स स नि ध प म ग म प नि ध म म गा
अ अ अ अ अ अ अ आ आ आ आ अ अ ए पि य ई

ससनिप इति गीतप्रयोगः । निसग्गगम ग्गमगगरिस इति गीतान्तर-प्रयोगः । पधनिपनिधप मगम पनिधममागसनिप इति सूलादिः । इएएऐ प्रयोगः । तुळजधरधिर्मजाअआरे—तअपुढंडरेगरुबद शिशुचठंबंते एएऐ...प्रयोगः ।

॥ इति कन्नडगौलकः ॥

श्रीरागमेलजः पूर्णो देवगांधारकाभिधः ॥

गातव्यः प्रातरेवैष षड्जन्यासग्रहांशकः ।
आरोहे रिधवर्जो ऽवरोहे रिधसमन्वितः ॥

अस्योदाहरणम्—ममगरिसनि सगमपपानिधधपम गमपनिसा सनिधपममग पमगरि सरि निसागरिग सरिनिस्सा इति तारषडजतानप्रयोगः । निधपममगा गमपनिनिस निधपममगा अस्मिन्मध्यस्थायिनि ठाये । ममगरिसनि निधपम ममगरिस निसस्सा मुक्तायां गामापानिपनिनिसा इति ठायप्रयोगः ।

ग म ग म प नि प नि स ग रि स सा नि ध ध प प ध प म ^म^ ग रि सा
अ अ अ अ अ अ अ नि अ अ अ आ आ यं यें उ ङ्गु ने ए ऐ त्त
इति गीतप्रयोगः ।

॥ इति देवगांधारकः ॥

श्रीरागमेलसंभूता पूर्णा सालगभैरवी ।
षड्जन्यासग्रहांशा ऽसौ यामे गेया तुरीयके ॥
इति श्रीतुलजेन्द्रेण कथिता सर्वसंमता ।

अत्रारोहणे संपूर्णषाडवौडुवमूर्च्छनातानाः नागच्छन्ति । सनिसारिगसा रिगमसा पाधपसा इत्यागच्छति । अवरोहणे तु संपूर्णतया ऽऽगच्छति । अस्योदाहरणम्—गगरि सरिसस्सनिधप धधप ससरिस गगरि पपधपसास्स निसधपमगरिस रिगमसा गगरि इत्युद्ग्रहप्रयोगः । निसधप धधप ससरिसरि निसध पधधप इति पञ्चमस्थायिनि ठाये । ससरि सरिगगरि पपधपसा स्सनिधपमगरिस इति ठायप्रयोगः ।

म म ग ग रि प प प ध प सा
अ अ अ आ आ आ अ अ अ आ रे
सासनिधप मगरीरिग सानिसगरि सनिधपमगरीसा इति गीतान्तरप्रयोगः ।

॥ इति सालगभैरवी ॥

श्रीरागमेलजातेयं माधवाद्यमनोहरी ।
पूर्णा गेया सायमेषा षड्जन्यासग्रहांशका ॥

पूर्णा गेया । सा रमणीइ रमणीइय बा अ आ अं तलविलसितुरेए (?) । अत्रारोहणे धैवतलङ्घनम् । अवरोहणे पञ्चमलङ्घनम् । गरिनिधनि गरिगमनिधम पधनिनिस्सासा सानिधम निधम गमपधमगगरि सरिनिधनिसस्स इत्युद्ग्रहप्रयोगः । गरिनिधनि गरिगमगरि गरिनिधनि गरिगमपधमगरि

गमगरि गरिनिधनि गरिगमगमनिधमा मधमगरि गरिनिधनि इति ठायप्रयोगः । गमपधमगरि गमगंगगम पनिधमपनिध निसासनिधम निधमगरिगम गरिनिधनिसरि निधमगरिस इति गीतप्रयोगः ।

॥ इति माधवमनोहरी ॥

शुद्धदेशीराग एष जातः श्रीरागमेलतः ।
संपूर्णस्वरसंयुक्तः षड्जन्यासग्रहांशकः ॥

अत्राप्यारोहे गांधारलङ्घनमिति हेतोः धनिसरिगरिरि इति गांधारान्तक्रमे गांधार आगच्छति, तदुपरिगमने नागच्छति । अस्योदाहरणम्—पामप गरिस निगमपनिधपधनीसा निधपमनिपमगरिस निधपमस इत्युद्ग्रहे स्थायिनि च प्रयोगो ऽस्ति । निधससधसस्सा धरिसरि निधसस्सा धसस्सा धरिसरि पमपमगरिस गरिरिनिधसस्सा धसस्सा इति ठायप्रयोगः ।

॥ इति शुद्धदेशी ॥

मध्यमग्रामरागः श्रीरागमेलसमुद्भवः ।
संपूर्णः सग्रहन्यासांशस्त्वयं परिकीर्तितः ॥

आरोहावरोहयोः स्वरगतेरुदाहरणम्—पाधपमगरिसरिसानिसनिसनि सरिसा रिगमपधनिस्सा सनिधप मगरिसनिरिसास्सा ।

॥ इति मध्यमग्रामरागः ॥

श्रीरागमेलसंभूतः सैन्धवीराग ईरितः ।
संग्रामकर्मणि जयप्रदः सायं प्रगीयते ॥
संपूर्णस्वरसंयुक्तः षड्जन्यासग्रहांशकः ॥

अस्य रागस्यारोहावरोहयोरुदाहरणम्— सारीसा रिसनिनी धनिसरि सरिमाम्मपधपनिधप सानिधपमपमागरि ममगरिरीस्सा इत्येवंरीत्या ऽस्याः स्वरगतिः ।

॥ इति सैन्धवीरागः ॥

काफिरागस्तु संपूर्णः षड्जन्यासग्रहांशकः ।
श्रीरागमेलसंजातः सायं गेयः शुभप्रदः ॥

अस्यारोहावरोहयोः स्वरगतिर्निराघाटा । अस्योदाहरणम्—रीगगरिसा रिगमपधनिसा सनिधपमगरिसा रीगगरिसा निधप धानीस्सा इत्यालापः । पधनिसरिगमपमानिनि सनिपममपम पगरिसरिनिनि धपमपधनिस रिरिनिपमगरिस इति गीतप्रयोगः ।

॥ इति काफिरागः ॥

श्रीरागमेलजः पूर्णो हुसेनीराग ईरितः ।
षड्जग्रहांशकन्यासः सायंकाले प्रगीयते ।।

अस्योदाहरणम्—रिगमागरिस रिगमपनिमनिधपम निधनिस्सा निधपम पधमागरिसा रिगरिरिस्सा एवंप्रकारेणास्य स्वरगतिः ।

।। इति हुसेनीरागः ।।

श्रीरञ्जनीसमाख्योऽयं रागः श्रीरागमेलजः ।
षाडवः स तु विज्ञेयः पञ्चमस्वरवर्जनात् ।।
षड्जग्रहांशकन्यासः सायं गेयः प्रकीर्तितः ।

अस्यारोहावरोहयोः स्वरगतेरुदाहरणम्—मागरिसरि निधनिसनिस गरिगम धमनिधम निधनिसाधस्सा निनिधम निधम मधमम गरिगम रिरीसस निधनिसास्स इत्युद्ग्रहप्रयोगः ।

।। इति श्रीरञ्जनीरागः ।।

श्रीरागमेलसंजाता षड्जन्यासग्रहांशिका ।
रिवर्जिता मालवश्रीः षाडवा मङ्गलप्रदा ।।
रागाङ्गमेनां शंसन्ति सा गेया सर्वदा बुधैः ।

आरोहणे मध्यमादिषाडवतानः समायाति, षड्जादिगांधारादितानौ न भवतः । अवरोहणे तु षड्जादिमूर्च्छना निषादादिषाडवतानाः समायान्ति । अस्योदाहरणम्—मपधनिसा सगसा इत्यारोहणी । सानिनीधनीधपममगस इत्यवरोहणीकटकप्रयोगः । निसनिधनिधप अस्मिन्ठाये । मपधनिस निनिसा निध निसनिधनिधपापनी निनिनिधममगस इति ठायप्रयोयः । निनिधप ममप निधपममप ममपपनिधम ममगस सानिधनिधप ममपनिनिस इति ठायप्रयोगः । निनिधममगस सनिनिधपममगस इति गीतप्रयोगः ।

।। इति मालवश्रीः ।।

श्रीरागमेलसंभूता सेयं देवमनोहरी ।
गवर्जनात्षाडवा स्यात् षड्जन्यासग्रहांशिका ।।

अवरोहे धैवतलङ्घनम् । अस्योदाहरणम्—निसरिममप मपधनिमपम पनिनिस्सा निपधनिपा पममपमरि ममरिरिरि सनिसारिधनिनिप मपनिनिस रिरिपमारि ममरिरिस सनिनिस्सा इत्युद्ग्रहप्रयोगः । धनिपमपप्पा निनिसनिप धनिपमपपा इति ठायप्रयोगः ।

रि म प नि नि प म प नि नि सा स नि धा नि प मा प म म रि रि रि
स मु उ द्रु रे ए ज ल ज स खा त्म ज सु ख सं<sup></sup>अ धा अ य कु रे ए

स नि ध नि   प म रि सा
र घु ना अ   य कु रे ए
इति गीतप्रयोगः ।

॥ इति देवमनोहरीरागः ॥

जयन्तसेनाख्यरागो जातः श्रीरागमेलतः ।
रिवर्जितः षाडवो ऽयं षड्जन्यासग्रहांशकः ॥

अस्यारोहावरोहस्वरगतेरुदाहरणम्—मागसनिधनिधपम पनिनिससा गगम-धपमनिनिस्सा नीधपममगमगसा इत्युद्ग्रहप्रयोगः । सान्निधनिधपमगग-मगसा इत्यवरोहणीषड्जतानाः । अस्मिन् रागे पदद्रवो बहवः सन्ति ।

॥ इति जयन्तसेनः ॥

श्रीरागमेलसंजातो मणिरङ्गुः प्रकीर्तितः ।
सग्रहांशन्याससयुक्तः षाडवः स्याद्धवर्जनात् ॥

अस्यारोहावरोहस्वरगतेरुदाहरणम्—निसरिगगरिनी निसरी गरिरिसनी सारिमपा मपनि सानिपमगरि रिसास्सा इत्यालापप्रयोगः ।

रि म प प्प नि प म म   पा प प म ग रि रि
स व रि प्प वि स उ वि   वि त्या स न ते थे हूं
ग रि रि सा नि स्सा री नी स रि स सनिस इति गीतप्रयोगः ।
वि अ रु प्र त्य म्र अं मि र वि ळे य

॥ इति मणिरङ्गुरागः ॥

मध्यमादिस्तु रागाङ्गरागः श्रीरागमेलजः ।
गधलोपादौडुवो ऽयं सायंकालेषु गीयते ॥
रक्तिरेतस्य रागस्य मुरल्यां दृश्यते ऽधिका ।

अस्यारोहावरोहयोः स्वरगतिरवक्रा । अस्योदाहरणम्—पापामनिपनि-पपमरिमाम्मा रिरिममपपनिनिस पनिपनिपपमरि मरिमरिरिसरिरिसारिरि-सांनि सनिपनिसारिरी मम्मप रिपपमरि मारि मरिरिसनिस सनिप निसरि ससनिपमरिसस्सा इत्युद्ग्रहप्रयोगः । रिपमरिमपससा ससनिपम पमरि-सरिमारिरिसनि इति गीतप्रयोगः ।

॥ इति मध्यमादिरागः ॥

धन्यासिरागो रागाङ्गो जातः श्रीरागमेलतः ॥
रिधलोपादौडुवो ऽयं प्रातर्गेयः शुभप्रदः ।

अस्यारोहावरोहयोः स्वरगतिरवक्रा । अस्योदाहरणम्—मगसनि सगमप पनिपनिस्सा इत्युद्ग्रहप्रयोगः । निपनिनिसनिपमगस इति तारषड्जतान-प्रयोगः । पमगसा गमपमगस गमपनिपमा गमपमगसा गमपनि पनिनि-सनिप पनिपमगमपमगस इति ठायप्रयोगः ।

ग म ग म प नी प नी स म ग सा

अ अ अ अ अ आ अ आ अ अ अ आ

ससनिपममगसा इति गीतप्रयोगः ।

॥ इति श्रीरागविवेकः प्रकाशितः ॥

अथ नाटरागः समेलः—

शुद्धाः स्वराः स्युः समपाः षट्श्रुत्यृषभधैवतौ ॥
अन्तराख्यानगांधारः काकल्याख्यनिषादकः ।
एतैः सप्तस्वरैर्युक्तः शुद्धनाट्याश्च मेलकः ॥
अस्मिन्मेले शुद्धनाटीमुख्या रागाः प्रकीर्तिताः ।
नाटी भाषाऽङ्गसंपूर्णा षड्जन्यासग्रहांशिका ॥
सायंकाले तु गातव्या ऽवरोहे धगवर्जिता ।

अस्यारोहावरोहयोः स्वरगतिरवक्रा । अस्योदाहरणम्—ससस्सानिपम रिगम-पधनिससनिपापप्पा निपनिनी इइइस्सास्सा इत्युद्ग्रहप्रयोगः । ससनि पसस ससनि इति निपाद्स्थायिनि ठाये मुक्तायम् । सासारिरि रिगम-पधनिससनिपसाससस्सा इति प्रयोगः । रिगमपनिपससा इति च प्रयोगः । गमपससा रिससरिससनिससनिपममरिस इति प्रबन्धः । ससनिपममरिस-ससा इति सूळादिप्रयोगः ।

॥ इति शुद्धनाटीरागः ॥

अथ प्रोक्तोदयरविचन्द्रिका नाटमेळजा ॥
टक्कभाषेति विज्ञेया संपूर्णा सग्रहांशिका ।
धगवर्ज्यौडुवा सेयं गेया सायं तु नाटवत् ॥

अस्यारोहावरोहयोरवक्रसंदर्भा स्वरगतिः । अस्योदाहरणम्—सानिप्पसनि पमरिपम पसनिस रिरिपमप सनिनिस्सा निपपमरि मसरिनिसास्स इत्युद्ग्रह-प्रयोगः । रिनिसस्सारिरिमरिसा रिनिसस्स अस्मिन् ठाये । रिमरिप मपस-सास्सनिप मपपनिमप रिमरि रिनीसस्सा इति ठायप्रयोगः । रिमपनी पास-सनिप ससरिरिपा पमरिससनिपम इति गीतप्रयोगः ।

॥ इत्युदयरविचन्द्रिकारागः ॥

अथ मालवगौलरागः—

शुद्धाः स्युः समपाः शुद्धरिषभः शुद्धधैवतः ।
अन्तराख्यानगांधारः काकल्याख्यानिषादकः ॥
एतैः सप्तस्वरैर्युक्तो यो मेलः परिकीर्तितः ।
सायं मालवगौलः स संमतो गानवेदिनाम् ॥
अस्मिन्मेले तु ये रागा जायन्ते तानथ ब्रुवे ।
आद्यो मालवगौलः स्यात्ततः सारंगनाटिका ॥
रागा ऽयमाद्रिदइयाख्यश्छायागौलाह्वयस्तथा ।
टक्को गुर्जरिका गुण्डक्रिया च फलमञ्जरी ॥
नादरामक्रसौराष्ट्र्यौ तथा मङ्गलकैशिकः ।
मेचबौलिर्मागधी च तथा गौरीमनोहरी ॥
मरुवाख्यो गौलिपन्तुः सावेरी पूर्विका तथा ।
संपूर्णरागा एते स्युः षाडवाः स्युरनन्तरम् ॥
गौलश्च ललिता बौलिः पाडिः कन्नडपूर्वकः ।
बङ्गालो ऽथ मल्लहरिः पूर्णपञ्चमसंज्ञकः ॥
शुद्धसावेरिका मेघरञ्ज्याख्या रेवगुप्तिका ।
मालवीति च चत्वार औडुवाः परिकीर्तिताः ॥

अस्य मालवगौलस्यारोहावरोहयोरवक्रा स्वरगतिः । अस्योदाहरणम्—सरिसासरि सरिसा रिससा रिससा रिससारीं सनिधपगरिपपा सा रिगमपधनिस इत्यायित्तप्रयोगः ।

सा ऽऽस स नि धा नि सा नि ध प मा नि ध प ध मा प ग मा प ध नि स रि
आ र श्री वि न ग रा अ धि पु रे अ आ न वि द मु उ उ उ रु ति रे ए
इति गीतप्रयोगः । ध प प ग प पा रि स रि स स सा इति गीतान्तरप्रयोगः ।
स पु त स पु त स्व रि र स्व रि र

॥ इति मालवगौलरागः ॥

सारंगनाटी संपूर्णा षड्जन्यासग्रहांशिका ।
मेले मालवगौले स्याज्जाता सायं प्रगीयते ॥

अस्य रागस्यारोहणी मध्यषड्जादितारषड्जान्ता । आरोहणे गांधारनिषादौ क्रमेण नागच्छतः । षड्जादिरिषभादिपञ्चमान्तधैवतान्तसंदर्भयोर्गांधार

आगच्छति । मध्यमस्वरादितारषड्जान्तसंदर्भे निषाद आगच्छति । एतेषा-मुदाहरणम्—धससरि सरिमगरि ममपमपधधप मपधससा इति तारषड्ज-तानप्रयोगः । निसरिमगारिगमप पपमा इत्यवरोहीधैवततानप्रयोगः । मपध निस धपममपमरि इति पञ्चमस्थायिनी । धपधमपनिसरि रिसधप इत्याद्यठाये मुक्तायिप्रयोगः । सनिधप ममपमरिमगरिस धसरिममम पपधध पमगारीरे-सा सा इति ठायान्तरप्रयोगः ।

रि रि प पा म रि रि स नि स रि ग म प म रि रि स नि स
लो बो ल मा न स चं च री इ इ इ इ इ इ इ इ इ इ रु

इति गीतप्रयोगः ।

म प ध नि सा रि म ग रि रि सा न ध प म ग रि सा
ते ए ए ए न वे ने ते न ते न ते न ते न

इति प्रबन्धः ।

॥ इति सारंगनाटीरागः ॥

मेलान्मालवगौलीयादार्द्रदेशी समुत्थिता ।
संपूर्णा सग्रहन्यासा प्रातर्गेया प्रकीर्तिता ॥

अस्यारोहावरोहयोः स्वरगतेरुदाहरणम्—रीसधसरिगमाम्मा सासा धाधा-पमपम गगगरि सधधप धनिसाध इति एडुपुप्रयोगः । सारिरिस धसरिगमा-गगारी इति मध्यमस्य तानः । सधधधा पाधा निधपमा धधपमा पपमा गगरि इति सारणीठायप्रयोगः ।

सरिगमपधनिसाऽसा रिसनिधपपमगरिस इति गीतप्रयोगः । ससरि-
अअअअअअनअन्द संपुणुठंञविवेएशि दुरित
सरिममासा ध ध ध्ध प ध प प प पा धससस धपमगगरी
दअभयठ्याके न र क्ष स भा ति ध द ति पबकेस रीययअकेदे

इति सूलादिप्रयोगः ।

॥ इत्यार्द्रदेशीरागः ॥

मेलान्मालवगौलस्य च्छायागौलः समुत्थितः ।
पूर्णो निषादग्रहो ऽयं सर्वकालेषु गीयते ॥

अस्यारोहावरोहयोः स्वरगतिः समविषमतया ऽऽगच्छति । अस्योदाहरणम्—माम्मगस रिसनिसा धससरि सरिमग रिगमप धधप ममपध सानीसा

धधपपममगस इति षड्जस्थायिनि तारषड्जस्थानप्रयोगः । रिगमापा धानिनिसा सनिधपमा ममगस इति ठायप्रयोगः ।
म म प प ध प ध नि सस स नि ध ध प प म ग म इति गीतप्रयोगः ।
ग आ वि त्रि क आ र्य ते     श त द् लं श अ र दं
म म म म म प ध ध नि स स नि प म ग रि ममम इति सूलादिप्रयोगः ।
स त्य रि गे स दा चा र रि गे नित्यं नि म अ चरदिगे इति च्छायागौलः ॥

टक्को मालवगौलीयमेलाद्भूतो ऽल्पपञ्चमः ।
पूर्णः षड्जग्रहादिश्च गेयो ऽह्नः पश्चिमे बुधैः ॥

अस्यारोहावरोहयोः स्वरगतिर्दूरसंगतिका । अस्योदाहरणम्—मागम रिरिगमधधनिस्सा निधममरि गरिरिगमसा इति स्थायिप्रयोगः । अल्पपञ्चमोदाहरणम्—
समपनिगसम ।

॥ इति टक्करागः ॥

मेलान्मालवगौलीयाज्जाता पूर्णा तु गुर्जरी ।
प्रातःकाले तु सा गेया रिग्रहा परिकीर्तिता ॥

अस्यारोहावरोहयोः स्वरगतिरवक्रसंदर्भा । अस्योदाहरणम्—पाधरिसस सरिधगधपम गमपधनिस्सा निधपामा गगगारि इत्युद्ग्रहप्रयोगः । रिसनिस धसरिसनिसा निसा रिसनिसा धसरिसध रिगपामगस इति ठायप्रयोगः । अस्मिन्नेव ठाये । धनिसा धपमा पमगगारि रिसनिससा इति प्रयोगः । निधधनिध धनिधप गधध पापमगगगारि गामापधन्निसारिसनिपधरिसनिसस्सा सरिगमपधनिसारिगा रिसनिधपमगरिसा इति गीतप्रयोगः । अस्य रागस्य सरिगमा इति मध्यमान्तमूर्च्छना नागच्छति ॥

॥ इति गुर्जरीरागः ॥

मेलान्मालवगौलस्योद्भूता गुण्डक्रिया प्रगे ।
गेया संपूर्णतायुक्ता सन्यासांशग्रहा मता ॥

अस्य रागस्यारोहावरोहयोः समविषमतया स्वरगतिरागच्छति । अस्योदाहरणम्—मपमगरिस गमपसनिमपम गमपगरिस रिसनिस्सस्सा इति षड्जस्थायिनि तारषड्जतानप्रयोगः । गमगसरिसनि सरिसरि गमगसरिसनि अस्मिन् ठाये । रिसनिसा गरिसनिपमम मागारि सरिसरिपमगसरि-

सनिसस्सा इति मुक्ताय्याम् । धधधपामरिगमपा गमपानिसरि सनिमप मपमा पपनिसस्सा इति ठायप्रयोगः ॥

॥ इति गुण्डक्रियारागः ॥

मेलान्मालवगौलीयाज्जातेयं फलमञ्जरी ।
सन्यासांशग्रहा पूर्णा सायंकाले प्रगीयते ॥

अस्यारोहावरोहयोः संश्लिष्टतया स्वरगतिः । अस्योदाहरणम्—सारिनिध-निसरि गगम धपधपम गधध ससनिस्सा निधनिधधपमगाम्मरिस रिसनि-धनिसरिसास्सा इत्युद्ग्रहप्रयोगः । गगमरिस मगमरिस मगमप मगमरिस अस्मिन्ठाये । मगमधधसनिसा निधपममगमारिसा इति ठायप्रयोगः ॥

॥ इति फलमञ्जरीरागः ॥

मेले मालवगौलीये नादरामक्रियाऽभिधः ।
सायाह्ने गीयते पूर्णः षड्जन्यासग्रहांशकः ॥

अस्यारोहावरोहयोरवक्रगतिका मूर्च्छना । अस्योदाहरणम्—रिसास्सानि-धनिधनिसरि निसरिमगमधपपमग धधनिस्सा सनिधनिधधपपमगरिरि-सनि धनिधधपपमग गमपधनिसरिगा इत्युद्ग्रहप्रयोगः। धधनिससा निसस्सा-रिरिरिस निसरिरिसनिध अस्मिन् ठाये । रिरिगारिगमम गगधपमग धधनि सानिध धनिधधपपमगा गमपमगारिगारिस इति ठायप्रयोगः । धनिधनिसानि-धपामगमधपमधमपमग इति सूलादिप्रयोगः । सरिगमपधनिसानिध, गरिसनिधनिनिधमगमगारिसा इति गीतप्रयोगः ॥

॥ इति नादरामक्रियारागः ॥

मेलो मालवगौलस्यः यः सौराष्ट्र्याः स एव हि ।
षड्जन्यासग्रहांशेयं सर्वकालेषु गीयते ॥

अस्यारोहावरोहयोः स्वरगतिः समविषमतया ऽऽगच्छति । अस्योदाहरणम्—सस्सासरिसनिधाप पधपधनिधप पमगारिगमप्पाप्प गमधमपधनिध पपमप-धनिसा धनिसरि सरिगमाम्मागरीसा सास्सानीइइध सनीइइइसास्सा इत्यायित्तप्रयोगः । धामपगारिसा गमपम पधधप पमपधानिस्सा इति तार-षड्जतानप्रयोगः । सनिधपमगारि गगमपनिधप सनिधपपमगरि गगपम-धनिधप सनिधपमगारि इति ठायप्रयोगः । सनिधनिसरिगमपधनी धपप-मगरी गमपा इति गीतप्रयोगः ॥

धनिसरिसरि ग म प ध ध स स सा स स स्स सा स नि ध प म प ग रि ग
बृन्दअअअ व न भा सु री य मु ना ती रे त्रि वि क्र म स्वा अ अ अ अ अ मि
इति गीतान्तरप्रयोगः ॥

॥ इति सौराष्ट्रीरागः ॥

मेलो मालवगौलीयो मचबौलेरयं पुनः ।
संपूर्णः सग्रहादिश्च सदा गेयः शुभावहः ॥

अस्यारोहावरोहयोः स्वरगतेरुदाहरणम्—रिसधरिसा धसरिगा रिगधधपप ममग मपधसा निधपमा पधनिधपमगारिसरिसानि इत्युद्ग्रहप्रयोगः । धरिसध रिरिगरिरिरिरिसध इति धैवतस्थायिनि ठाये । रिरिगग पममगा गपधसा निधपमा पधनिधाम गारिरिसा इति ठायप्रयोगः ।
रि रि ग ग प म ग ध प ध सा इति गीतप्रयोगः ।
अ अ अ अ अ अ अ अ अ अ ई

रि रि ग गा प म म ग ध प ध प प म गा धपधपधसा सनिधपपमगरि-
तों गि ण गिण त क म क त क दि गि दि गि दिगि मदनमदन तण्डग्वण्डनगण्डभै
सरिसनिधप पमगमरिगसा इति प्रबन्धप्रयोगः ॥
रविएरुबुं डअवअअई

॥ इति मेचबौलिरागः ॥

मेलो मालवगौलीयो मागध्याः पञ्चमस्य च ।
भाषेयं सग्रहन्यासा पूर्णा गेया सदा त्वियम् ॥

अस्य रागस्योदाहरणम्—धराणिमूडगुलु इति दरुप्रयोगः । सारिसरिगमा-धपधासानिधनिधा सानिधपा धनिधपामा गमगारिसारिसास्स इत्यालापप्रयोगः ।

॥ इति मागधीरागः ॥

मेले मालवगौलस्य जाता गौरीमनोहरी ।
संपूर्णा संग्रहादिश्च सायं गेया शुभप्रदा ॥

अस्य रागस्य स्वरगतेः सरसिजभवशंकरारूक्ममै अमरुल इत्यादिदरुप्रयोगः ।

॥ इति गौरीमनोहरीरागः ॥

मेळान्मालवगौलीयाज्जातो मारुवसंज्ञकः ।
पूर्णः षड्जग्रहादिश्च सायं गेयः प्रकीर्तितः ॥

अस्य रागस्य स्वरगतेरुदाहरणम्—सानिधपमपगारिसा गमधपमपनीसा ग्गारिरिसनी धपनीसा ग्गामपगस्सि गारिसनीसास्सा इत्यालापप्रयोगः । धधपमपससासागागाम रिरीगरींरी सनिसास धससगरिरि सनिध धपम जयजयताहानुधीमन्ता दुणमंहति सअंजत दशअअअ अअअ आनन पससनिधप धमपगमगारिसा इति गीतप्रयोगः । सस्सरिगम पधनिधप प्रध्वंसअअ भअअदकअरणो
सानिसानिधापधधमापधसनो धधपम पपग रिरिसनिधधपा इति गीतान्तर-
ताअनंतगोओओओविंदअनुउ अनुदअ आअ मुरअअरिआ
प्रयोगश्च ।

॥ इति मारुवरागः ॥

मेलान्मालवगौलीयादुत्पन्नो गौलिपन्तुकः ।
बोद्दुभाषा सग्रहांशः पूर्णः सायं प्रगीयते ॥

अस्य रागस्यारोहे गधलङ्घनम्, अवरोहे ऋजुतया स्वरगतिर्भवति । अस्योदाहरणम्—रिमपनीस्सा रिरिसनि धपमगारेस रिगरिरिसनिधपनीस्सा रिमापनीसरिसनिसासा इति गीतप्रयोगः ।
सानिधपमगरि इति गीतान्तरप्रयोगः ।
वारिधमअआजि
रिमपधपमगरिमपधपसनिधपमगारिस इति सुलादिप्रयोगः ।
सअअअअअअअधजिइइइइवनवअअद

॥ इति गौलिपन्तुरागः ॥

जाता मालवगौलीयमेलात्सावेरिकाऽभिधा ।
पूर्णा प्रातः प्रगातव्या षड्जन्यासग्रहांशिका ॥

अस्य रागस्यारोहे गांधारनिषादलङ्घनम् । अवरोहे स्वरगतिर्ऋजुतया ऽऽगच्छति । अस्योदाहरणम्—धसरिमगरि मपधधनिधपम पधसनिधसा निधपमा रिसरिगरि सनिधसास्सा इत्यालापः ।

॥ इति सावेरीरागः ॥

मेलान्मालवगौलीयाज्जातोऽयं पूर्विरागकः ।
तृतीयप्रहरे गेयः पूर्णः षड्जग्रहांशकः ॥

अस्यारोहावरोहयोः स्वरगतिर्ऋजुतायुक्ता । अस्योदाहरणम्—सागरिगमपधनीधपसा सनिधपमगपमगगारिसा इत्यालापः ।

॥ इति पूर्विरागः ॥

मेलान्मालवगौलीयादुत्पन्नोऽयं बिभासुकः ।
मह्रीनः षाडवः सांशग्रहः प्रातः प्रगीयते ॥

अस्यारोहावरोहयोः स्वरगतेरुदाहरणम्—सारिरिगारिसधा सरिगपधनि-निसानिनिधापगरि पधपधपगपगरिरिस इत्यालापः ।

॥ इति बिभासुरागः ॥

गौलो मालवगौलीयमेलजो धैवतोज्झितः ।
षाडवो निग्रहो रागाङ्गो ऽयं शश्वत्प्रगीयते ॥

अस्मिन् रागे गांधारो मध्यमान्तारोहक्रम एवागच्छति, षड्जपर्यन्तारोहक्रमे नागच्छतीति तानषड्जान्निषादाद्वा रिषभषड्जावध्यारोहक्रमे ऽपि गांधारो नागच्छतीति गांधारहीनौडुवमूर्च्छनातान एव षाडवमूर्च्छनातानश्च । अस्योदाहरणम्—रिमपनिसरिगमरिरिससनिप मररिस निसान्नीप्पमारी इति संचारिणि चतुर्थमुकुलिततानप्रयोगः । सासारीरीगागामामारिरेसा इति षड्जस्थायिनि मध्यमातानप्रयोगः । रिरींसनिसस्सा इति षष्ठस्थायिधाये । रिसरिपमम रिगम रिसनिसस्सा इति धायप्रयोगः । रिसरिसनिसरिगम इति षड्जादितया ऽपूर्वप्रयोगः । निनिनिधममगसाममनिध मगमनिनि-धमनिनिस्सनिधनि इति प्रबन्धप्रयोगः । रिमपनिसरिससनिप सासनिप-
मणिमुडलीमअ मट्ठिमक
मरि गमा इति सुलादिप्रयोगः ।
दंतिइई

॥ इति गौलरागः ॥

मेलान्मालवगौलीयाद्वङ्गालः कन्नडादिकः ।
जातो भाषाङ्गो निवर्जः प्रातर्गेयश्च गग्रहः ॥

अस्यारोहे गांधारलङ्घनम्, अवरोहे तु क्रमवक्रतया गांधार आगच्छति । अस्योदाहरणम्—गमगरिरिसधसरिमागमगरि गमपपधधपमधधपमधधसा धपमगमगरि रिसधसास्स इति तारषड्जतानप्रयोगः । गमगरि रिसरिमम्म अस्मिन् स्थायिनि । सधसरिमपधपापप्पमगमा गमगरिसरिध धपम गमगरि रिसधसस्सा इति ठायप्रयोगः । मपपधध पमपधसा धसस्सधप पप्पमगम
इइइ इइइर पुरप्पतिह मद्दणु रेरे
गमगरिसध पमगमगरिसा ।
वुरु हुड य नअहेएशुरुरे

॥ इति कन्नडबङ्गालः ॥

मेलान्मालवगौलस्य जातोपाङ्गं मवर्जनात् ।
षाडवा बहुली गेया सायंकाले तु मग्रहा ॥

अस्य रागस्यारोहे पधनिसेति प्रयोगः क्वाचित्कः । अवरोहे तु षडपि स्वराः क्रमेणायान्ति । अस्योदाहरणम्—सरिगपधनिनिसा निधपध रिरिसधनिसारी ससधपागगारी इति रिषभस्थायिनि प्रथमताने प्रयोगः । रिरिसनिधपध इति धैवतस्थायिनि ठाये । गरिसनिधधपगा धधनिधाधपगा धपगगारि सनिसस्सा इति ठायप्रयोगः । म प ग प ध साधसरिरि गस
अअअअ अअअअअअ अअ
पगरिसनिध पगा इति गीतप्रयोगः । निधपगपगरिग सरि गपधसरिगप-
अनुपममिर पट्टुछटसिंगिणी मुणानिनआ
गरिस इति तानीकरणप्रयोगः । रिगरिसनिधपगपगरिसरिग इति प्रबन्धप्रयोगः ।

॥ इति बहुलीरागः ॥

मेलान्मालवगौलीयात् पाडिरागः समुत्थितः ।
गलोपात्षाडवः सायं गेयः षड्जग्रहादिकः ॥

अस्यारोहे स्वरा धैवतलङ्घनेनैव संचरन्ति, क्रमतया न संचरन्ति ; अवरोहे तु धैवतस्पर्शोऽपि नास्ति, धैवतलङ्घनं च तुल्यम् । अस्योदाहरणम्—निसरिपमरिमारिमपधपपास्सा सानिपा धपपमरि रिसनिसरि इत्युद्ग्रह-प्रयोगः । रिसनिपधपप इति पञ्चमस्थायिनि ठाये । रिमपधधधप ससा-सनिप धपमप पधपमारिसनिप इति ठायप्रयोगः । रिमपधप मपपमरि
अंत जन संदो
रिसनिस रिसनिपधधपपमरि ससस इति प्रबन्धप्रयोगः ॥
वइ सं तत चिन्तितअनंदअ आश्रिइ

॥ इति पाडिरागः ॥

मेलान्मालवगौलीयाज्जाता मलहरी स्मृता ।
निलोपात्षाडवा प्रातर्गातव्या धैवतग्रहा ॥

अस्यारोहे गांधारवर्जनम् । अवरोहे स्वरगतिर्जटिलतया ऽऽगच्छति । अस्योदाहरणम्—धधधपमपधसाधप मपधधपमगरिसा धाप मपधधपा मगरिसा रिसधस्सा इति तारषड्जतानप्रयोगः । रिसधसस्सा धसस्सा अस्मिन्स्थायिनि । मरिरिसधप पधधपगरिस रिसधसस्स साधधसा धधसा

रिसधप पाधधपमगरि ममपपधधससरि रिमगरि सरिसध रिरिसधसस्सा
इति ठायप्रयोगः। साधस सधधाधधपमप धससधधधप मगरिममगरि
तारुण तरणीयतेएजव वोजलुवअशिरि मकुटदअअअ
इति पुरन्दरदाससुलादिप्रयोगः। धरिरिसधप धपमगरिस इति गीतप्रयोगः।
विरू पअक्ष करुणाअकर

॥ इति मलहरीरागः ॥

पहीना षाडवा टक्कभाषेयं ललिता प्रगे।
गेया मालवगौलीयान्मेलाज्जाता च सग्रहा ॥

अस्यारोहावरोहयोः स्वरगतिरवक्रा। अस्योदाहरणम्—निसरिमगरि रिसनि-सरिससनिध मधनिसरि रिममध मधनिस्सा निधनिधममगरिरिसा निसरि-सनिध निधनीसा इत्युद्ग्रहप्रयोगः। गमगरिसनि अस्मिन्स्थायिनि धनि सरिमगा रिगमधनिसनिधमगा गमधमगरिसा इति ठायप्रयोगः। मगरिसा-निधनिधममगरिस इति गीतप्रयोगः ॥

॥ इति ललितारागः ॥

पूर्णपञ्चमरागो ऽयं जातो मालवगौलतः।
निवर्जनात्षाडवो ऽयं षड्जन्यासग्रहांशकः ॥

अस्यारोहावरोहयोः स्वरधाटिर्निराघाटा। अस्योदाहरणम्—सरिसारिग-मपधस्ससा धधधपमपमगरिसस्सा इत्युद्ग्रहप्रयोगः ॥

॥ इति पूर्णपञ्चमरागः ॥

मेलान्मालवगौलीयाच्छुद्धसावेरिकाभिधः।
गनिलोपादौडुवः सग्रहो गेयः प्रगे बुधैः ॥

अस्यारोहावरोहयोः स्वरगतिर्निराघाटा। अस्योदाहरणम्—मरिरीसध सधस धधससरिरिमाम्मा रिमपधधपा पमप धास्सा इत्युद्ग्रहप्रगोगः। रिरिसध धसधप रिसध धसधपा इति पञ्चमस्थायिनि ठाये। धसरिमपधधसधधपम पापमरि मरिरिसध धधप मपधस धधपमा पापमरिमरिरिसधसस्सा इति ठायप्रयोगः। धस्ससस्ससरिम्मप्प, धधसस्ससारीमापा इति गीते द्वितीय-
सत्य द्रुत नम्रद्रुत कनदद्रुत सामन्ता
खण्डिकाप्रयोगः। धसरिमसरि ससरिसध धधपापमरिस इति गीते
सअद्रविरिति निसअअद्र कुणसमुद्रअअ

प्रथमखण्डिकाप्रयोगः ॥

॥ इति शुद्धसावेरीरागः ॥

मेलान्मालवगौलीयान्मेघरञ्जिः पधोज्झितः ।
औडुवः पर्जन्यकाले गयः षड्जग्रहादिकः ॥

अस्यारोहावरोहयोः स्वरगतेरुदाहरणम्—निसमागममनिमगमा निमगम निसानी निसनि मगम निसम निसनिमगमा मममम गमरिसनिसा इत्युद्ग्रहप्रयोगः । सनिमगम निसरिससनि मगम अस्मिन्स्थायिनि ससमगम निसरि निसरिरिस मगमरिसा निसरिसनि मगम रिसरिस निससा इति ठायप्रयोगः ॥

॥ इति मेघरञ्जिः ॥

मेलान्मालवगौलीयादुद्भूतो रेवगुप्तकः ।
मनिवर्जादौडुवः सन्यासः सायं प्रगीयते ॥

अस्यारोहावरोहयोः स्वरगतिरवक्रा । अस्योदाहरणम्—धाप गपधसा धधध-सधपगपगरिग रिसा धासरिगरिसधसास्स इत्यारोहितारषड्जतानप्रयोगः । साधधधपगगरिसा इत्यवरोहितानप्रयोगः । रिसधसस्स रिरिगा रिसधसस्सा अस्मिन्स्थायिनि धसरिरिगरि पाधपगरि साधपग षधसस्स षधस धधप-गपगरिस रिसधसस्स इति ठायप्रयोगः । गपधसारिगा धधधपग

अअअआअआ अअअअअ

पगारिरिस रिरिरिसधधप गरिसा इति गीतप्रयोगः ॥

अअअअअ अअअअअअअ अअआ

॥ इति रेवगुप्तरागः ॥

मेलान्मालवगौलीयाट्टक्कभाषा तु मालवी ।
गधवर्ज्यौडुवा सायं गेया षड्जग्रहांशिका ॥

अस्यारोहावरोहयोः स्वरगतिरवक्रा । अस्योदाहरणम्—रिरिसनिसास्सानिप निनिपञ्जिनीप्पपाम नीपमपमम रिम्ममारि रीमपनी पनिसरि रिम्मरिसा सरिसास्सनि पञ्जिपञ्जिनीइइस्सा इत्यायित्तप्रयोगः ॥

॥ इति मालवीरागः ॥

शुद्धाः स्युः समपाः पञ्चश्रुती रिषभधैवतौ ।
साधारणाख्यगांधारः काकल्याख्यनिषादकः ॥

एतैः सप्तस्वरैर्युक्तो वेलावल्याश्च मेलकः ।
वेलावली तु भाषाङ्गं पूर्णेयं हि स्वमेलजा ॥
पन्यासांशग्रहा प्रातर्गेया संगीतकोविदैः ।

अस्यारोहावरोहयोः स्वरगतेरुदाहरणम्—पामारि सान्निध सरिसरि गगरि सनिध पधध रींसरी गगरी गग रिगमपधधपससा निधपसा निधप-मगरिससानिध सरिसरि गगगरि पपमागरी गगगरी ससनिध पधधधसस्सा इत्युद्ग्रहप्रयोगः । सान्निध सरिसरि सान्निध अस्मिन्ठाये धससरिसनिधप-मगरिसारिसस्सा इति ठायप्रयोगः । ससनिध धपध सनिध धपध अस्मिन् ठाये ससरि सरिगगरि गमप धधपससा ससनिधसनिधपमधरि ससनिध धाससारिगगरी इति ठायान्तरप्रयोगः । मगरिगमपपधपध धसाससस-निधपस निधपमगरिसनिध इति गीतप्रयोगः । अस्य रागस्यारोहे निषादो नागच्छति ॥

॥ इति वेलावलीरागः ॥

शुद्धाः स्युः सरिगाः शुद्धपञ्चमः शुद्धधैवतः ॥
काकल्याख्यनिषदो विकृतपञ्चममध्यमः ।
एतैः सप्तस्वरैर्युक्तो वरालीमेल ईरितः ॥
वराली पूर्णतायुक्ता सग्रहांशा स्वमेलजा ।
भिन्नपञ्चमभाषेयं सर्वयामेषु गीयते ॥

अस्यारोहावरोहयोः स्वरगतिरवक्रा । अस्योदाहरणम्—गरिगमपध मपधस-सानिधपमगरि इत्युद्ग्रहप्रयोगः । सरिगमपधनिस रिगमपधनिधप पधनिप-मगगारिस सरिसनिधधपम पधपमगगारिसा इति संचारिप्रयोगः । रिगरि-सनिध गरिसनिध अस्मिन्ठाये गरिगमपपपमगगारि रिगरिस सनिधधपम पधपममगरि पमगगरि गरिस रिसनिसस्सा इति ठायप्रयोगः । गमपधनि
भगवन र
सगरिसनि धनिधध पमगमगारिगारिस इति गीतप्रयोगः । धनिधपमगरि
वोरुपे ए ए लवतअ रुअइयलयियअअ तत्तगद्रुकु द्रुद्रु
गारिस इति प्रबन्धप्रयोगः । स नि ध ध प म ग ग रि स निनिनिसपधसानिसा
द्रु द्रुद्रु कौ ड व रु मु कि ति यअअ तडवरु निनि रां धू ब
इति सुलादिप्रयोगः ॥

॥ इति वरालीरागः ॥

शुद्धाः सपरिधाः स्युर्विकृतपञ्चममध्यमः ।
गांधारो ऽन्तरसंज्ञश्च काकल्याख्यनिषादकः ॥
एतैः सप्तस्वरैर्युक्तः शुद्धरामक्रिमेलकः ।
अत्र रागाः शुद्धरामक्रियाऽऽद्याः संभवन्ति हि ॥
रामक्रिरागः संपूर्णः क्रियाऽङ्गमिति कीर्तितः ।
षड्जग्रहांशकन्यासः सायं सो ऽयं प्रगीयते ॥

अस्यारोहावरोहयोः स्वरगतिरवक्रा । अस्योदाहरणम् — साधधपम पधपम माप्पाधमगारि सरिगमपाप्पा धमग गगमपध मपधनि धनिसा निसरिगरि-गमागारि इत्यायित्तप्रयोगः । निसारनिसरिग रिगमपधमपधससाध धपम-माप्पाध्धमग्गारि इति तारषड्जतानप्रयोगः । रिगारिसनिस्स अस्मिन्ठाये पामगधधनिधधपम गगारिसनिसरि सनिधपमग इति ठायप्रयोगः । ग रि ग म प ध ध नि स ग रि ग म प पा पा इति गीतप्रयोगः ।
ते ए य अ अ अ अ अ अ अ अ अ अ नि रे क
सगरिगमपधप मगमगरिसा इति प्रबन्धप्रयोगः । ध ध प म ग रि ग म प्पापा
कु ह्म अ अ द अ अ अ हि ई
इति सुलादिप्रयोगः ॥

॥ इति रामक्रियारागः ॥

रामक्रियामेलजो ऽयं संपूर्णो दीपकः स्मृतः ।
षड्जन्यासग्रहांशो ऽयं गेयो यामे तुरीयके ॥

अस्यारोहावरोहयोः स्वरगतिरवक्रा । अस्योदाहरणम्—सान्निधपपधधपमा-पाप्प गगापमापा धधससरिरिगग रिरिससनिधधपप धपधरिसनीसास्स रीरी-रीरीगाधापा इति रागवधनी । सानिपानिधप इत्यपि रागवर्धन्याम् । धनिसरि-सनीसास्सा इत्यान्तिमन्यासः । रिरिसनिससा गगा ममा रिरिसनिरिसमारि-रिसनी गरिसनिधधपधानमरिसानिसा (इति ठाये) सारिगापप्पा रिगमगरिसा सारिगमपाधनिमरिगपाप्पा धधनी धनिधपा सानिधप मपा गमपधा पमगरिसा निसारगारिसनिधपा धपधनिसा निधमगरिससस्सा इति ठायप्रयोगः ॥

॥ इति दीपकरागः ॥

शंकराभरणो रागः संपूर्णो ऽयं स्वमेलजः ।
षड्जग्रहांशकन्यासः सायंकाले प्रगीयते ॥
मेलो ऽस्य समपाः शुद्धा रिधौ पञ्चश्रुती निगौ ।
काकल्यन्तरसंज्ञौ च तैः स्वरैः सहितो मतः ॥

अस्मिन्मेले तु ये जाता उद्दिशामीह तान्क्रमात् ।
शंकराभरणाख्यो ऽथारभीः शुद्धवसन्तकः ॥
सरस्वतीमनोहरी पूर्वगौलाभिधस्तथा ।
नारायणी च नारायण्याद्देशाक्षिसंज्ञकः ॥
सामन्तनामा कुरञ्जी तथा ऽसौ पूर्णचन्द्रिका ।
सुरसिन्धुश्च जुलावुर्बिलाहुरसमाह्वयः ॥
गौडमल्लारकेदाराविल्याद्याः परिकीर्तिताः ।

अस्यारोहावरोहयोः स्वरगतिरवक्रा । अस्योदाहरणम्—ससानिधनीस्माधप मगरिगमपधानसानिधा गगारिस सारिमा सानधनीस्सा इत्यायित्तप्रयोगः । निनिध निसासानिपा धाप गपधसनीसाधामागामरीसा इति रागवर्धनीप्रयोगः । सारिगमपधनिसा ससनिपपपमरिगमरीस इति संचारिप्रयोगः । सनिसधनिसस्सा धनिसरि सनिस धनिसस्स इति ठायप्रयोगः । स स नि प प प म
शं क र अ अ
रि ग म प ध स स नि ध स सा इति गीतप्रयोगः । सरिगमपधानिस सा
भ र अ अ अ अ ण श या अ न
निधपमपममगरि इति गीतान्तरप्रयोगः । सनिधपमगरिस इत्येको गीतान्तरप्रयोगः । सस्साधपमगरिसा इति प्रबन्धप्रयोगः । गमपसनीनीनीपामगरी सानीधपधपनीसा इति सुलादिप्रयोगः । अअअअअअअअआअम्बव एएए चरअंलतअदित तक्कुद्कुकुदरी अमितअअआआअअर्थप्रदाअअअअयका (?) इति शंकराभरणरागः ॥

शंकराभरणीयो यो मेलः स्यात्तज्ज आरभीः ।
पूर्णः सांशग्रहन्यासः सायं गेयः शुभप्रदः ॥

अस्यारोहावरोहयोः स्वरगतिः संदर्भविशेषतया ऽऽगच्छति । अस्योदाहरणम्—साधा रीस मागरिसानी धनिस धधप पमपधनिधनिसरिमागरि रिसन्निधनीसास्सा इत्यायित्तप्रयोगः । पपमगरिगमपधनिस्सा इति तारषड्जतानप्रयोगः । साधानिसधधपपमगरिरिसनि इत्यवरोहे षड्जतानप्रयोगः । मगरिरिसनिधनिसा अस्मिन्ठाये, सनिधधपपममगरिरिसस्सा पमापममगरि गमपधनीसरीस इति ठायप्रयोगः । स म प ध नि स रि ग म प ध स सा
अ रि अ अ अ अ अ अ अ अ अ आ

स स रि स नि ध प   म म प म ग रि स इति गीतप्रयोगः । म प ध स
अ अ अ अ अ अ अ   अअअ अ अ अ अ   दु रु वि ष
ध ध प प म ग री री स स ध स स रि स ध स सरि स ध स  रि म
य ग ल सं निधि इनि इ ने दि रे डु न र वा रि ई
गरिरिस इति सुलादिप्रयोगः ॥

॥ इत्यारभीरागः ॥

शंकराभरणीयाच्च मेलाच्छुद्धवसन्तकः ।
संपूर्णः सग्रहः सांशो रागाङ्गं गीयते प्रगे ॥

अस्यारोहावरोहयोः स्वरगतिरवक्रसंदर्भतया ऽऽगच्छति । अस्योदाहरणम्— रिसनिधसास्सानिधधप ममधधप पमगमम्मागारी इत्यायित्तप्रयोगः । सासानिधधममा माधनिसरिस धससासा इत्यायित्तान्तरप्रयोगः । मधसा- निपमारि इति कटकप्रयोगः । मापधनिसरिगममपगरि इति मध्यमस्थायिनि, मगरिसध अस्मिन्ठाये, धससरिमागसममपपधसा सरिधपमा निधपपध ममगारीरिसनी रिरिसा सनिधपम धधपपामगमगरिसनिसस्सा इति ठायप्रयोगः । मगरिगमपधनिस इति गीतप्रयोगः । रिमगरिसनिधपमगारिसा
वलितरं ग त्रिकथअं ग दअदिइवृत
इति गीतान्तरप्रयोगः ।

॥ इति वसन्तरागः ॥

शंकराभरणाख्यानरागमेलसमुद्भवा ।
पूर्णा सांशा निशागेया सरस्वतीमनोहरी ॥

अस्यारोहे पञ्चमनिषादलङ्घनम् , अवरोहे तु गांधारलङ्घनम् । तस्मान्मपधेति धनिसेति च नागच्छति, अवरोहे तु मगरिसेति नागच्छति । एतैर्विना ऽन्ये संदर्भा आगच्छन्ति । अस्योदाहरणत्—रिगगम गमधधनिपम धधसा सनिधधनिधपपम पमगमरिगगमगरिस इत्युद्ग्रहप्रयोगः । सनिधपमम्म अस्मिन्ठाये, धधससरिरिगगमरि गमधधनिधपम इति ठायप्रयोगः ।
स रि ग म ध प म ध ध स   स नि ध प म ग म रि रि सा   इति
वि द ल न स अ य क रे ए   ज य र घु ना अ य कु रे ए
गीतप्रयोगः ।

॥ इति सरस्वतीमनोहरीरागः ॥

शंकराभरणीयो ऽयं मेलो ऽस्मिन्पूर्वगौलके ।
संपूर्णः सग्रहांशो ऽयं गेयो यामे तुरीयके ॥

अस्यारोहे स्वरगतिः क्रमेण नागच्छति, अवरोहे तु क्रमेणागच्छति । अस्योदाहरणम्—निसासध रिससरिसधापपाम धान्नीनीसा रिरिसरिगगम म्मगारिरिसाधापाम धाधानीनीसासा इत्यायित्तप्रयोगः । पपमगरिधपामधानिनीसा इति तारषड्जतानप्रयोगः । सनिधपप्पाम धनिसरिसनिधपप्पम अस्मिन्ठाये, रिसनिधपपम पप्पमा पमागसा रिगगरि मपपम पामाधाधानिनिसा इति ठायप्रयोगः । रि स रि ध ध प प म ग रि मा म म म्मा रि रि इति
स मु उ द्र गु ण स मु द्र ध रि ज टि ज्ज ट आ
गीतप्रयोगः । ध ध प म प धा सा नि ध प म ग रि स नि ध इति सुळादि-
तं दु तो तो कि ता अ अ अ अ अ अ अ अ अ
प्रयोगः ।

॥ इति पूर्वगौलरागः ॥

शंकराभरणाख्यानरागमेलसमुद्भवा ।
नारायणी गग्रहांशा संपूर्णा गीयते प्रगे ॥

अस्यारोहावरोहयोः स्वरगतिर्विशेषसंदर्भेणागच्छति । अस्योदाहरणम्—रिसास्सनि धसनिनिधप धसरिमगरिगमपमपधासा स्सनिनिधप मपम मगरि ममरिगसरिससनि इत्युद्ग्रहप्रयोगः । सनिनिधपधसस्सा धनिसरिसध सनिनिधप धसस्स अस्मिन्ठाये, धनिधनिसरिमगारिममप धासास्सनिनिधप मगरिरिसानिधासा इति प्रयोगः । धधमपधसा सरिरिममपा पधध-
ळउमिइमनो वअहअअर
पमगरिसा इति नामावलिप्रयोगः ।

॥ इति नारायणीरागः ॥

शंकराभरणीये ऽत्र मेले स्याद्ग्रहांशिका ॥
नारायणाद्यदेशाक्षी पूर्णा गेया स्मृता प्रगे ।

अस्यारोहे स्वरगतिर्विशेषसंदर्भतया ऽऽगच्छति, अवरोहे तु क्रमेणागच्छति । अस्योदाहरणम्—पामपमा मगरिससनि धनिसरिगमपा धधपधानिसा सनिधपमपा माम्मगरिसा सनिधनिसा धनिसरिसनिधप मपममाग्गरिसा सनिधनिसास्सा इत्युद्ग्रहप्रयोगः । सनिधपमप अस्मिन्ठाये धनिसरिमगरि-

गमपमगरि सनिधपमप इति प्रयोगः । पुनश्चास्मिन्ठाये मगरिसनिधपप-मगरिरिसस्सा इति प्रयोगान्तरम् । अटतालध्रुवम् । मपाधधसासर्सनिधधप

श्रियानयाअरेएएयअणा

मपामागरिरिरिरिरिरिस्सा इति सुलादिप्रयोगः ।

देएएव अअअनिरुउन्

॥ इति नारायणाद्यदेशाक्षीरागः ॥

शंकराभरणाख्यानरागमेलसमुद्भवः ॥
सामन्तः सग्रहः सायं गेयः सपूर्णतां गतः ।

अस्यारोहावरोहयोः स्वरगतेरुदाहरणम्—ससससससनि धनिस सनिधप पा सा धासा निरिगाममगरिसा निसामगरिसनि रिसनिमनिधनिस्सा इति कटकायित्तप्रयोगः । रिसरिगरीसा गारिसनिरिसनिस सनिधनिसास्सा इति षड्जस्थायिनि तानः । निरिगाममममग रिगममगारिसा इति चतुर्थ-तानप्रयोगः । ममममगमपाग माम्मगगा गममगारिससान्निनि निसाम-मप्पा ममपमगरिगममगारिस सनिनि निसारिस रिससनिधनिसास्स, अवरोहिणि सससर्सनिध निससनिधापप धनिसाससनिपाम्ममग ममपासा निधपपमगा रिगममगरिससनिधसास्सा अवरोहे षड्जतानः । पुनरेकः कटकप्रयोगः । सास्सनिधप मपनिन्निधप मपममगरिगा ममपपनीधपधनी-स्सानि सरिगमम्माग ममगरिगा गारिस्सनि सरिगमगगमगरिसा सरिस-सनिधनिस सनीधप मपधनिस्सा इति पुनरायित्तप्रयोगः । रिससनिनि सनिनि ससनिरिगागरिस रिससनिनी सनी अस्मिन्ठाये मधनिसनिरिगम-मगा मपनिधपपमगा ममगरिसनि धनिसनिन्निधपा मगरिसनिसास्स इति ठायप्रयोगः । सनिधपमपनीनिध पपमगरीग मपधनिस्सा इति गीतप्रयोगः । ...रिसनिसनिधपममग मागमगरिगा इति प्रबन्धप्रयोगः ।

॥ इति सामन्तरागः ॥

शंकराभरणीयो यस्तन्मेलोत्था कुरञ्जिका ॥
पूर्णोपाङ्ग सग्रहांशा सायं गेया प्रकीर्तिता ।

अस्यारोहे गांधारधैवतलङ्घनम् । तस्मात् सरिगमेति च पधनिसेति च नागच्छति । अवरोहे षड्जादिक्रमावरोहे धैवतलङ्घनम् । तस्मात् सनिधपेति प्रयोगो नागच्छति । अस्योदाहरणम्—पामगरिसा निनिसरिमगगरिसा सनिनिपमम मगगरिसा निनिस रिममगमपनिनिसा निसरिसरिमगग पमम-

गमपनिनीसा इत्युद्ग्रहप्रयोगः। रिससनिनि अस्मिन्ठाये सासनि सरिममग गमम धमपनीनीसा सनिपनिधधपा पममगरिगारिसा सनिनी इति ठायप्रयोगः।

॥ इति कुरञ्जीरागः ॥

शंकराभरणीयो ऽयं मेलो ऽस्मिन्पूर्णचन्द्रिका ॥
पूर्णेयं सग्रहा सांशा सायं गेया प्रकीर्तिता।

अस्यारोहावरोहयोः स्वरगतेरुदाहरणम्—सासरिसनि सानि पपसनिपम पमगमरिरी ममपपसनि परिसरिनिसधनि पपरिसनीसास्सा इत्यायित्तप्रयोगः।

॥ इति पूर्णचन्द्रिकारागः ॥

शंकराभरणीयो ऽसौ मेलो ऽस्मिन्सुरसिन्धुकः ॥
संपूर्णः सग्रहन्यासः सायं गेयः प्रकीर्तितः।

अस्यारोहावरोहयोः स्वरगतेरुदाहरणम्—माम्ममगरि गरिसनिसरिगरी धपामगरि गरिसनि सारिगरिगरी इति प्रयोगः।

॥ इति सुरसिन्धुरागः ॥

शंकराभरणीयो ऽसौ जुलावोर्मेल ईरितः ॥
संपूर्णो ऽयं सग्रहांशः सायमेष प्रगीयते।

अस्य रागस्य मन्द्रपञ्चममारभ्य मध्यपञ्चमपर्यन्त एव प्रयोगः। अस्योदाहरणम्—सासनिध नीधधप धनिधनि रीसास्सा धनिसरिगरि गमगगरीस पामगमगरिगरिसनि धनीधधपा धनिसरिगमप मगरिसनि धनीधधप धनीसा इति प्रयोगः।

॥ इति जुलावुरागः ॥

शंकराभरणीयो ऽयं मेलस्तज्जा बिलाहुरी ॥
सा षड्जांशग्रहन्यासा पूर्णा प्रातः प्रगीयते।

अस्यारोहे मध्यमलङ्घनम्। अतो गमपति मध्यमसहिततया नागच्छति, अवरोहे तु क्वचित् क्रमेण क्वचिद्व्यवधानेन चागच्छति। उदाहरणम्—सरिगपमगगरिसा रिगपधसनि धसानिधपामगरिसनिधरिसा इति प्रयोगः। गाधप.धमगगपधसा निसधपमगगरिसा सनिसधपमगपध सनि इति गीतनंदनं दनपं च षां डवअअअवरिस बरुवाकिएरएअअ रे रे
प्रयोगः।

॥ इति बिलाहुरीरागः ॥

गौडमल्लाररागः शंकराभरणमेलजः ।
संपूर्णः सग्रहन्यासो वर्षास्वेष प्रगीयते ॥

अस्यारोहावरोहयोः स्वरगतेरुदाहरणम्—गरिमाम्म मपधसा स्ससरिसानि- धपपधपाप्प मगरिसरिगरि धपामगगरि सरिगरिससास्सा ।

॥ इति गौडमल्लाररागः ॥

रागः केदारसंज्ञः शंकराभरणमेलजः ।
संपूर्णः सग्रहः सांशः सायंकाले प्रगीयते ॥
धवर्जः षाडवः सो ऽयं सवक्रस्वरसंगतिः ।

अस्योदाहरणम्—मगमपानिमा पानिसास मगमगरिसनिसा इति गीत- प्रयोगः । गमपनीनिस नीपामपमगरिसा इति सुळादिखण्डिकाप्रयोगः । पनिसरिसांनिपमनिपमगरिससस इत्यष्टतालसुळादिप्रयोगः ।

॥ इति केदाररागः ॥

काम्भोजी ककुभस्य स्याद्भाषा पूर्णा च सांशिका ।
मनिवर्ज्यारोहणीयं सायं गेया विचक्षणैः ॥
मेलो ऽस्याः समपाः शुद्धा अथ पञ्चश्रुती रिधौ ।
गांधारो ऽन्तरसंज्ञश्च कैशिक्याख्यनिषादकः ॥
एतैः सप्तस्वरैर्युक्तस्तत्र जातास्त्वमी मताः ।
काम्भोजीनारायणाद्यगौलकेदारगौलकाः ॥
बडहंसस्तथा नागध्वनिश्छायातरङ्गिणी ।
मनोहरीशपूर्वा च काम्भोज्येरुकुलादिका ॥
कुरञ्जी नाटपूर्वा च कन्नडश्च सपूर्णताः ।
दशाथ नटनारायण्यान्धाली सामरागकः ।
रागो मनोहसंज्ञश्च चत्वारः षाडवा इमे ॥
देवक्रिया मोहनाद्यकल्याण्याख्याविहौडुवौ ।
आहत्य षोडशेतीमे काम्भोजीरागमेलजाः ॥

अस्यारोहणी मानिवर्ज्या । रक्तिविधयैव तु मध्यमः क्वचिदागच्छति । संपूर्ण- मूर्च्छनायां तु सर्वथा नागच्छति । अस्योदाहरणम्—गपधससानिप पधनि पधपमगरिसा इत्युद्ग्रहप्रयोगः । सरिगमरिस धनिपपध्धधासा इति राग- वर्धनीप्रयोगः । रागवर्धन्या येडुपिति नाम । धससा रिरिरि सरिरिरि इति रिषभस्थायिनि ठाये ममगम गमपप्पा गपधससानिप निनिधधा धपमपपम-

गरिसनिपा इति प्रयोगः ।

पामग पधससास पधनिधध प मगरिस इति गीतप्रयोगः ।
अय्यए इइयवय्य तिइयवय्यय्यय्य

म ग प ध स ध स रि रि स रि ग रि स इति प्रबन्धप्रयोगः ।
ज्जि ज्गु जि ज्गु की टक टक धि न ज्गु ज्गु जु त रि

॥ इति काम्भोजीरागः ॥

काम्भोजीमेलसंभूतः पूर्णो नारणगौलकः ।
निषादग्रहविन्यासो गेयो यामे तुरीयके ॥

अस्यारोहे पञ्चमपर्यन्तगमने गांधारविशिष्टतया ऽऽगच्छति, उपरि निधनिसधनिस इत्येवागच्छति, पधनिसेति नागच्छति । आरोहिण्यप्यवक्रतया ऽऽगच्छति । अस्योदाहरणम्—पामपमग रिगरिस रिमपनिधनिस सनिनिध पधपमा पामामगरिसगारिस इति षड्जतारतानप्रयोगः । मगरिगरिसा रिमप मगरिगरिसा अस्मिन्ठाये, रिमपा निनिसनिसनिधपधपम पममग रिगरिस इति प्रयोगो ऽस्ति । रि म प नि ध नि स रि सा नि स नि धा
अ अ अ अ अ अ अ अ नं दृ दे ए स

प प म ग रि ग रि इति गीतप्रयोगः । रि म म प नि ध नि स नि धा
य मि सु ध रु रे ए त कु धि कु तों गि णं गि

प ध म प म ग रि ग रि स इति प्रबन्धप्रयोगः ।
त क त क त क त क त क

॥ इति नारायणगौलरागः ॥

केदारगौलः संपूर्णः काम्भोजीमेलसंभवः ।
निन्यासांशोपाङ्गहनो गेयो यामे तुरीयके ॥

अस्यारोहे निषादगांधारलङ्घनम् , अवरोहे क्रमेणागच्छति । उदाहरणम्—सारसनिधप निनिधपमगरि रिमपनिनीध निसनिधपम पनिनिस इत्यायित्तप्रयोगः । पाधनिसरिममपा मपनिधपम मगरिसनिसा निसनिनिनिधपमाम्मा इति मध्यमस्थायिनि प्रथमताने प्रयोगः । पमगरिममपमगरि अस्मिन्ठाये रिमपनिनिनिसनिधपममगरि इत्येष प्रयोगो ऽस्ति । अस्मिन्नेव ठाये निधपमपधनिसा रिरिरिसनिधपममम्मगरिसानिसरस गमपनिधपधानिस रिममागरिस निधपमापधनिसा निनिसरसा निधपमगरिसनिधपा मपनिनिस

निनिरीरीरिसासा ससरिममपनिनीसा इति गीतप्रयोगः । निनिन्निससानिनि धपमगमधधनिनी इति ग्रहस्वरखण्डः ।

॥ इति केदारगौलरागः ॥

बलहंसः सग्रहांशः काम्भोजीमेलसंभवः ।
संपूर्णः सायमेवैष गेयः संगीतकोविदैः ॥

अस्यारोहे स्वरगतिर्ऋजुतया नागच्छति, अवरोहे तु समविषमतया ऽऽगच्छति। उदाहरणम्—पामरि गमपमारि मगरिस रिगरि सरिसनिधप धसरिमगरि मपधपससा निधपधपमग पमगा मगरिसारिसनिपधससरि इत्युद्ग्रहप्रयोगः । रिमगरिस रिरी धसरिमगरि गरिसरिरी अस्मिन्ठाये धसरिमगग धपमगरि सरिगरिसरिरी सानिधपा धपमगरिसरिरि इति ठायप्रयोगः ।

॥ इति बलहंसरागः ॥

नागध्वनिस्तु भाषाऽङ्गं काम्भोजीमेलजः स्मृतः ।
संपूर्णः सग्रहन्यासः सर्वदा गीयते बुधैः ॥

अस्यारोहावरोहयोः स्वरगतिर्वक्रा । रिषभधैवतयोस्तानाभावः । पञ्च शेषा अपि स्वरा ऋजुतया नागच्छन्ति । उदाहरणम् —मागमरिगसा मपपपनिधनि सानिनीस्सा निनिधमपमगमरिगसा सनिनीस्सा इति तारषड्जतानप्रयोगः । रिगसनिस समगमरिगसनिस मामपनिधप मपममगम रिगसनिस इति ठायप्रयोगः । मनिधनिनिससरिगस रीगसाससासनिसा
नं द र आदिमत अस्त माहितोद्याअअवि
मगमरिगससनिधनि निधनिपपमागरिग रिगा इति गीतप्रयोगः ।
रुतेरलुंकुमअअरु किलकमठरुकोटल

॥ इति नागध्वनिरागः ॥

छायातरङ्गिणीरागः काम्भोजीमेलसंभवः ॥
संपूर्णः सग्रहन्यासः सायाह्ने गेय ईरितः ।

अस्यारोहावरोहयोः स्वरगतिरवक्रतया ऽऽगच्छति। उदाहरणम्—मागरिससनिसरिममपपानिधपमपा मपममगरिसा निसनिनिधपम पधनिपम पधनिपम निन्निस्सासरी रिपममगरिसाससनीसरिनीसरीमगरिस इति द्वितीयरागवर्धन्यां प्रयोगः । ममपप्पधनिसापाधनिसासा अस्मिन्गीत एव सासससस
श्री इ इ इ इ

स नि ध प म ग रि स इति प्रयोगः ।
मु नि स ति य य अ अ

॥ इति च्छायातरङ्गिणीरागः ॥

काम्भोजीमेलसंजाता संपूर्णेशमनोहरी ॥
षड्जन्यासा सग्रहांशा सायं गेया प्रकीर्तिता ।
काम्भोजीमेलजा येरुकलकाम्भोजिसंज्ञिका ॥
संपूर्णा सग्रहन्यासा सायं गेया प्रकीर्तिता ।

अस्यारोहे गांधारनिषादलङ्घनसहितविशेषसंदर्भतया स्वरगतिरागच्छति, अवरोहे ऋजुतया ऽऽगच्छति । उदाहरणम्—सरिमपधप निधप धधस्सा निधधपमगरिगरीरिसा । अस्मिन्रागे दरुपदानां प्रयोगाः सन्ति ॥

॥ इति येरुकलकाम्भोजः ॥

पूर्णो नाटुकुरञ्ज्याख्यः काम्भोजीमेलजो मतः ॥
सन्यासांशग्रहः सायं गेयः संगीतकोविदैः ।

अस्यारोहावरोहयोः पञ्चमलङ्घनम् । रक्तिलाभाय कचित्पञ्चम आगच्छति । उदाहरणम्—सान्निधनिस निसरिगामरिसनिध निसनि पधा निधमगस मगमनिधानस निसरिगामरिस निसनिपधा निधनिसास्सा एवमादिप्रयोगः ॥

॥ इति नाटुकुरञ्जीरागः ॥

काम्भोजीमेलसंजातो रागः कन्नडसंज्ञकः ॥
संपूर्णः सग्रहन्यासः सायं सो ऽयं प्रगीयते ।

अस्यारोहावरोहयोः स्वरगतिः समविषमतया ऽऽगच्छति । उदाहरणम्—सास्सनिस रीससनिस धापममा गामगरिसा मगमपमा धानिसानिरीसनिसा धापमधानिसनीरीसा इत्यालापप्रयोगः । सरिगमपधनिसरिनिस इत्यादि गीतप्रयोगः ।

॥ इति कन्नडरागः ॥

नटनारायणीरागः काम्भोजीमेलसंभवः ॥
निन्यूनः षाडवः षड्जग्रहः सायं प्रगीयते ।

अस्यारोहे गांधारो नागच्छति । स्वरगतेरुदाहरणम्—पामपमगरि मगरिगा-रिरी पधधरिसरि मपधपम पधधास्सा धसधधपमप ममगरि गरिरी इत्युद्ग्रहप्रयोगः । सधधसस्सा धसस्सा अस्मिन्षड्जस्थायिनि ठाये पाधससरिरि

मगरि गरिरि ममपपधधसास धसधधपम पममगरिगरिरि इति प्रयोगः। सरिसरिमपा मपधससरि मापगरिस्सरिगगरि धसध्धधपपममगगरिरिस अअअअअआ अअअअ अअ कोदंडखण्डनुरे दशग्रीववधिइइइइइइरु इति गीतप्रयोगः ॥

॥ इति नटनारायणीरागः ॥

काम्भोजीमेलसंजातेयमान्धाली धवर्जिता ॥
षाडवा सग्रहन्यासा सायंकाले प्रगीयते।

अस्यारोहे षडजादिमपर्यन्त एव गांधार आगच्छति, अन्यत्र नागच्छति। उदाहरणम्—निसरिगम रिममप मपनिनीस्स इत्युद्ग्रहप्रयोगः। सास्सनिप पनिप पममरि गमरिसा इत्यवरोहिषड्जतानः। पमरिगमम्म रिमप पनिपपमरि-गमम्म रिममपनिनिस निपपनिपपमरिगमम्म इति ठायप्रयोगः। पनिसरिगम-रिसनिससनिपपमरिगमरिस इति गीतप्रयोगः।

इत्यान्धालीरागः।

काम्भोजीमेल उत्पन्नः सामरागो निवर्जितः॥
षाडवः सग्रहन्यासः सदा गेयः शिवप्रदः।

अस्यारोहे गांधारलङ्घनम्, अवरोह ऋजुतया ऽऽगच्छति। अत्र रागे सरिगमपेति नागच्छति। उदाहरणम्—सरिसरिमगरि ममधधप धध्धास्सा इत्यारोहितारषड्जतानप्रयोगः। साध्धपमपमगमरि सास्सा इत्यवरोहिषड्जताने प्रयोगः। धरिरिस रिरिसा धसरिमगरि गरिमरि धरिरिस रिरिसा इति ठायप्रयोगः। ध सा स ध प म ग रि स रि म मा। इति गीतप्रयोगः।
सु जो न म ओ ओ ओ ओ पं धा

॥ इति सामरागः ॥

रागः काम्भोजिमेलोत्थो मोहनाख्यो निवर्जितः।
षाडवः सग्रहन्यासः सायं गेयो ऽतिरक्तिदः॥

अस्याल्पो मध्यमः। आरोहावरोहयोः स्वरगतेरुदाहरणम्—साधप धसरिग रिगमगगरि गरिरीसधपधधसा एवंप्रकारेणालापप्रयोगः।

॥ इति मोहनरागः ॥

देवक्रिया क्रियाङ्गो ऽयं काम्भोजीमेलसंभवः।
निगलोपादौडुवा सग्रहांशा गीयते सदा॥

अस्यारोहावरोहयोः स्वरगतिरवक्रसंदर्भा । उदाहरणम्—पममम्मरिस रिसधससमरिम ससपमप धवस्सा धसधधपमरिसा रिसधसा इति तारषड्जतानप्रयोगः । सधमपप्पा इति ठायप्रयोगः ।

॥ इति देवक्रियारागः ॥

मेले मोहनकल्याणी काम्भोज्याः परिकीर्तिता ।
मनिवर्ज्यादौडुवा सग्रहा सायं प्रगीयते ॥

अस्यारोहावरोहयोः स्वरगतिर्वक्रा । अस्या उदाहरणम्—सारिसधपा धसरिग रिगपगपधम्मा धपधसधप धपगरि गपगधपध गपगधपगा पगरिगरिरिसा एवंप्रकारेणास्य रागस्य स्वरगतिः ।

॥ इति मोहनकल्याणीरागः ॥

॥ काम्भोजीमेलसंभूताः संपूर्णषाडवौडुवरागा वृत्ताः ॥

शुद्धाः समपधाः पञ्चश्रुतिकर्षभ एव च ।
साधारणाख्यगांधारः कैशिक्याख्यनिषादकः ॥
एतैः सप्तस्वरैर्युक्तो भैरवीमेलको भवेत् ।
अस्मिन्मेले भैरवी चाहरी घण्टारवो ऽपि च ॥
इन्दुघण्टारवो रीतिगौल आनन्दभैरवी ।
हिन्दोलाद्यवसन्तश्च तत आभेरिरागकः ॥
धन्याशिनागगांधारी संपूर्णा इति विश्रुताः ।
औडुवो हिन्दोलरागो भैरवीमेलसंभवः ॥
उपाङ्गं भैरवीरागो धन्यासांशग्रहो मतः ।
संपूर्णस्वरसंयुक्तः सायंकाले प्रगीयते ॥

अस्य रागस्यारोहावरोहयोः स्वरगतेरुदाहरणम्—गारिसा सरिसस-निनिधपधनिधपम पमपधनि पधनिसा निसगम गमनिनिधनि पाधनिसनि निस्सा पधनिसनिनिध पधनि पधधपम गमगगारिसा इत्युद्ग्रहप्रयोगः । गगरि-सनिस गरिसनिस इति षड्जस्थायिनि ठाये गरिस सरिसनि निधनिपधपम पधनिपधनि धनिसगगमगरिस गगमगमपधपम मपमपग गगमगरिस इति प्रयोगः । सरिगमपधनिस पधनिधपमगरिसनिसा इति गीतप्रयोगः । सगगमगरिसनिध सनिन्निधधधापम इति प्रबन्धप्रयोगः । प ध नि स ग ग
कु ल ल ज न आ

म प म ग रि सा ग रि स रि स नि प ध नि इति सुलादिप्रयोगः ।
र अ धि स अ धि क म अ अ अ अ अ ल व

॥ इति भैरवीरागः ॥

आहरी टक्कभाषेयं भैरवीमेलसंभवा ।
संपूर्णा सग्रहन्यासा सायं सेयं प्रगीयते ॥

अस्य रागस्यारोहावरोहयोः स्वरगतिरवक्रसंदर्भतया ऽऽगच्छति । उदाहरणम्—मागरिस निसरिरिसा गगरिगमपधधरपमा स्सनिधधप मपधपपमगरिसानिसा इत्युद्ग्रहप्रयोगः । पपमगरिसानिस मपधरपमगरिसानिसा धधपगमप ससानिधर मपधरपमगरिसानिसा इति ठायप्रयोगः । स म म ग रि सा स
प दु म अ य वि म
म म प प ग म प नि स रि म नि ध प म प ग रि स सा इति
नो ओ ओ र म लु य अ ण कं पा स अ मा अ न त अ र ए
गीतप्रयोगः । मापप्पामपधप रमगगरिगमग रिरिसनि सासा सानिध मापधरप मगरिसा इति प्रबन्धस्वरखण्डः ।

॥ इत्याहरीरागः ॥

भैरवीमेलजो घण्टारवो रागाङ्गमीरितः ।
धन्यासांशग्रहः पूर्णः सर्वदा ऽप्येष गीयते ॥

अस्य रागस्यारोहावरोहयोः स्वरगतिरवक्रसंदर्भवती । उदाहरणम्—पामपगारिसगरिनिस गरिगमप निधरनीसा निसनिधपामपनिधप पमपमगरिसगरिनिसास्सा इत्युद्ग्रहप्रयोगः । गरिनिसस्सा निसस्सा इति ठायप्रयोगः ।
नी स ग रि ग म ग रि सा ग रि रि स ध्ध ध प म प ध प स्स स स
अ ए ए ए आ यि य यि य यि य य इ ए अ अ अ अ अ अ अ ध अ
निसानिधपपमपनिधप पमपगरिसगरिनिसासा इति गीतप्रयोगः ।
रुकरुकपिजन अए अए

॥ इति घण्टारवरागः ॥

इन्दुघण्टारवो रागो भैरवीमेलसंभवः ।
सन्यासांशग्रहः पूर्णः सर्वयामेषु गीयते ॥

अस्यारोहे धैवतलङ्घनम्, अवरोहे रिषभलङ्घनमिति कृत्वा पधनिसेत्यहारोहे मगरिसेत्यवरोहे नागच्छति । उदाहरणम्—सानिधपम पनिसा

निसरिरिगमगगसा रिगमपधपमपनीसा निसनिधपमाम्मगरिमगस इत्युद्ग्रहप्रयोगः । सनिधपमप निसरिस सनिधपमप इति ठायप्रयोगः ।

॥ इतीन्दुघण्टारवरागः ॥

भैरवीमेलजो रागो रीतिगौलसमाह्वयः ।
निन्यासांशग्रहः पूर्णः सायमेष प्रगीयते ॥

अस्यारोहे रिषभवर्ज्यम् , पञ्चमस्वरान्ता मूर्च्छना बह्व्यः, धैवतान्ततया ऽऽगच्छन्ती काचित्का । अवरोहे षड्जादिपञ्चमान्तमूर्च्छनायां धैवतलङ्घनम् , पञ्चमादर्वागागमने पञ्चमलङ्घनम् । अतः कारणादेकान्तरितद्व्यन्तरिततया स्वराश्चलन्ति । उदाहरणम्—मागरि गमगरिगरिस गमनिधमनीनिधमगरि- इत्युद्ग्रहप्रयोगः । निनिनि गरिस निनिनिनिगगमगरि गमगरिगरिसा अस्मिन्ठाये पानिनिस ससगगम पधपम पाधममागरि गरिसा इति प्रयोगः ।

ग रि न्नि सा नि सा निनी ध म मा
गु ण क्रि या लं कृ ति ना

म म ग रिगरिसा इति गीतप्रयोगः । नि नि स नि ध नि प नि ध म ग
प र ज्यो ति श्रु ति पा ति ति या ग ति स्तु अ रे

रि सा इति सुलादिप्रयोगः ।
अ ह यदे

॥ इति रीतिगौलरागः ॥

हिन्दोलाद्यवसन्तो ऽयं भैरवीमेलसंभवः ॥
संपूर्णः सग्रहन्यासः सर्वदा ऽप्येष गीयते ।

अस्यारोहणी पञ्चमपर्यन्तमृजुतया नागच्छति तदुपरि ऋजुतया ऽऽगच्छति, अवरोहिणी पञ्चमपर्यन्तमृजुतया ऽऽगच्छति ततो ऽर्वाङ्नागच्छति । उदाहरणम्—सास्सनिध सनिध पधपधनिनिधम पाधमगस गमपाध पधसस- मागस मगरिगसस मगस सनिधपधसास्स इत्यायित्तप्रयोगः । पधानीसास गागामागामप्पधधनिधममगस इति तारषड्जताने प्रयोगः । ससनिधपध- सस्सा ससगसमगस मगरिगसा इति ठाये प्रयोगः । म ग रि ग स
नि शि दि त स्व

स्स नि ध प ध नि ध प ग ग मा मा इति गीतप्रयोगः । म ग रि ग सा
गं व सु द अ र स अ त ट र सु क अ र व गं

नि ध ध नि ध म ग स इति सुलादिप्रयोगः ।
ठ इ इ र स अ ल दे

॥ इति हिन्दोलवसन्तरागः ॥

आनन्दभैरवीरागो भैरवीमेलसंभवः ॥
पूर्णः षड्जग्रहन्यासः सायमेष प्रगीयते ।

अस्यारोहावरोहयोः स्वरा ऋजुतया न चरन्ति, जटिलतया संचरन्ति । उदाहरणम्—पधपमप ममगगरिसनिनिस गगसा पापसास निनिध धपमप मगगरिस निनिसमगास्सा इति तारपड्जन्याने प्रयोगः । गगरिसनिनिस गारिसनिनिस गगमगमगसा इति ठाये प्रयोगः । म म ग रि ग रि स
अ वि इ ण्य उ सु ए
नि ध प म ग रि स स नि नी इति गीतप्रयोगः । ग म प ध प म ग
जं जं त्र ग अ त्र यु ग प भे ए ए ए ए द म
म सा ग रि ग रि स प म ग रि स इति गीतान्तरप्रयोगः ।
स सा र घु त ट र अ आ व अ ए

॥ इत्यानन्दभैरवीरागः ॥

आभेरिरागः संपूर्णो भैरवीरागमेलजः ॥
सांशः पञ्चमभाषायां सायंकाले प्रगीयते ।

अस्यारोहवरोहयोः स्वरगतिर्विशेषसंदर्भतया ऽऽगच्छति । उदाहरणम्—गमपसस रिसनिस निधपामगम पससाम मममम ममगगसनिसास्स इत्यायित्तप्रयोगः । पाममगगससा सामगमपासनिनि पपममगगससा निनिपपगमगमपससा इत्युद्ग्रहप्रयोगः । सानिधपम पमममगसस इत्यवरोहितानप्रयोगः । ससनिप सनिनिप पससनिसा निसानिनिपा इति ठाये प्रयोगः । सससममप ससानिधपममाममगारिसा इति गीतप्रयोगः । अयं घनमात्रयोग्यः ।

॥ इत्याभेरीरागः ॥

उपाङ्गं नागगांधारी भैरवीरागमेलजा ॥
संपूर्णा सग्रहन्यासा प्रातरेषा प्रगीयते ।

अस्यारोहावरोहयोः संदर्भविशेषतया चरन्ति स्वराः । उदाहरणम्—सानीधपमपनीधपनीपसा गारिगमगारिसारिनीस निधपमपनिसा मापनि सरिगमपनिधपमगारिसनि रिसनिधपमपनीसा इति गीतप्रयोगः ।

॥ इति नागगांधारीरागः ॥

संपूर्णा धन्यासिकेयं भैरवीरागमेळजा ॥
सन्यासांशग्रहा प्रातर्गेया संगीतकोविदैः ।

अस्य रागस्यारोहावरोहयोः स्वरगतिरवक्रा । उदाहरणम्—सानिधपमगा पमगरिसा गमपनीधपनीस्सा इत्याद्यालापः । पदानि दरवश्च बहवः सन्ति ।

॥ इति धन्यासीरागः ॥

हिन्दोलो भैरवीमेलसंजातो रिपवर्जितः ॥
औडुवः सर्वदा गेयः संगीतागमकोविदैः ।

अस्य रागस्यारोहावरोहयोः स्वरगतिरवक्रा । उदाहरणम्—गासनिधनिस गसगगम मधम गमधनिनिस्सा निधमा मधममगसा इत्युद्ग्रहे प्रयोगः । निनिधममगम निधममगम इति ठाये प्रयोगः । सगगमगगमा निनिस निन्निधममगसा इति गीतप्रयोगः ।

॥ इति हिन्दोलरागः ॥

इति श्रीभैरवीमेलजाता रागा निरूपिताः ॥
तुलजेन्द्रेण संगीतसारामृत इह स्फुटम् ।
सर्वेषु रागमेलेषु मुखारीमेल आदिमः ॥
शुद्धैः सप्तस्वरैर्युक्तो मुखारीमेल ईरितः ।
चतुश्चतुश्चतुश्चैव षड्जमध्यमपञ्चमाः ॥
द्विर्द्विर्निषादगांधारौ त्रिस्त्री रिषभधैवतौ ।
शुद्धा इत्युक्तसंख्याकश्रुतिकाः सादयो मताः ॥
अस्मिन्मेले मुखारी च ग्रामरागाश्च केचन ।
लोकप्रसिद्धनामा ऽयं शास्त्रसिद्धाभिधस्त्वसौ ॥
शुद्धसाधारित इति तुलजेन्द्रेण निश्चितः ।

अस्मिन् रागे रिषभगांधारधैवतनिषादा अस्यां मध्यमेलाख्यवीणायां किंचिन्न्यूनध्वनिका दृश्यन्ते, किंचिदुच्चध्वनिका अपेक्षिताः । अस्यारोहावरोहयोः स्वरगतेरुदाहरणम्—गरिरीन्निधसास्सा निधमपधनि पानिधामागारि रिमापा निधामा पधनिपधनिपा रिरिमगरिसरिगरिनिधसास्स इति प्रथमरागवर्धन्यपरपर्याय आयित्तप्रयोगः । गरिरिनिध सस्सा अस्मिन्ठाये रिमप रिमपानिधम धधनिपधनिसा रिरिमगरिसा रिमपन्निधम सान्निधम पाधान्नी निनिधमगरिसा गरिरिनिधसा इति प्रयोगः ।

रि स्स नि ध प म ध्ध नि नि ध म प प म ग रि सा
अ स्स अ अ अ रि तु स अ खि ले अ ति म ळ
इति गीतप्रयोगः ।
रि म प नि ध प प प म्म ग रि स
त क त रु ति ग त क त कं त क त क दं त कि ण
इति प्रबन्धप्रयोगः ।
स स रि ग म प ध ध नि नि ध ध स नि ध प म ग रि स
सं दे ए ए ए ए ए ए ए ए ह वि न दे स रु वो ओ तु म
इति सुळादिप्रयोगः ।

॥ इति मुखारीरागः ॥

शुद्धाः स्युः षड्जरिमपा गांधरो ऽन्तरसंज्ञकः ॥
पञ्चश्रुतिर्धैवतश्च कैशिक्याख्यनिषादकः ।
मेलो ऽयं वेगवाहिन्या एतैः सप्तस्वरैर्युतः ॥
मेले ऽस्मिन्सांप्रतं वेगवाहिन्येकैव दृश्यते ।
षड्जग्रहांशकन्यासा संपूर्णा वेगवाहिनी ॥
स्वमेलजा दिनस्यान्ते गेया संगीतकोविदैः ।

अस्यारोहावरोहयोः स्वरगतिरवक्रा । अस्योदाहरणम्—सान्निधनिस-निधनिधपमगमाम्म गमनिधपमगमागारिस गमपधानिधपम गमनिधनिसरिस मगरिसनिध निधपमगमस्सा इत्यायित्तप्रयोगः । निधपमगमम्म निधनिस निधपमगमम्मा इति ठायप्रयोगः । स रि ग म प ध नि ध प प मगमम्म
द ळ त अ अ अ अ अ नं ग
स नि ध प म ग रि सा इति गीतप्रयोगः ।
मं ट अ रे ए रे ए रे

॥ इति वेगवाहिनीरागः ॥

शुद्धाः सरिपधाः साधारणगांधार एव च ॥
काकल्याख्यनिषादो विकृतपञ्चममध्यमः ।
एतैः सप्तस्वरैर्युक्तः सिन्धुरामक्रिमेलकः ॥
अस्मिन्मेले सिन्धुरामक्रिया पन्तुवरालिका ।
सिन्धुरामक्रिरागो ऽयं संपूर्णः सग्रहांशकः ॥
सायंकाले तु गातव्यः स्वमेलोत्थो ह्ययं बुधैः ॥

अस्यारोहावरोहयोः स्वरगतेरुदाहरणम्—आरोहे पञ्चमलङ्घनम्, अवरोहे रिषभलङ्घनम्। सरिगगम ममपध मध्धधानिनीसा इत्युद्ग्रहप्रयोगः। सास्सनिध धनिधध मधध पममप गसरि सनिधध माधाधानीसारी गगममधध निनिसा धधपममप गसरि निसधध मध्धधानीनीस्स इत्यवरोहिषड्जतानप्रयोगः। पममप रिरिग ममध पममप रिरिग इति ठायप्रयोगः। गसरिगममधधमधधनिनिसा इति गीते स्वरखण्डः।

॥ इति सिन्धुरामक्रिरागः ॥

षड्जग्रहांशकन्यासा पूर्णा पन्तुवरालिका।
सर्वदेयं प्रगातव्या सिन्धुरामक्रिमेलजा॥

अस्यारोहावरोहयोः स्वरगतिरवक्रा। उदाहरणम्—सरिगमपधनिधनीस्स निधपमगरिसा रिगारिरिसा गरिनिधनिस्सा इत्यालापः। धपमपधनि गरिनिधपमगरिसा इति गीतप्रयोगः।

॥ इति पन्तुवरालीरागः ॥

गांधारो ऽन्तरसंज्ञो ऽन्ये शुद्धाः षड्जादयः स्वराः॥
एतैः सप्तस्वरैर्युक्तो हेजिज्जीरागमेलकः।
हेजिज्जीप्रमुखा रागा अस्मिन्मेले भवन्ति हि॥
हेजिज्जिरागः संपूर्णो यामे ऽह्नो गीयते ऽन्तिमे।
षड्जग्रहांशकन्यासः स्वमेलोत्थो मतः सताम्॥

अस्यारोहावरोहयोः स्वरगतेरुदाहरणम्—साध्धसरिस निधप धधपम गमाप्पा गमपमगगारिसा रिगम गमपध धनिधधपम गमपधधस्सा धसरिग रिरिगरिस रिरिस निधपधसस्सा इत्यायित्तप्रयोगः। धधपम गमपप्प अस्मिन्ठाये सारिगमपा धसनिधप इति प्रयोगो ऽस्ति। धरिसनिधपममगारिगरिस इति गीतप्रयोगः।

॥ इति हेजिज्जीरागः ॥

काकल्याख्यनिषादो ऽन्ये शुद्धाः षड्जादयः स्वराः।
युता एते यत्र सामवरालीमेलकस्तु सः॥
अस्मिन्सामवराली च रागो गांधारपञ्चमः।
भिन्नपञ्चमरागाद्या रागा अन्ये भवन्ति हि॥
रागः सामवराल्याख्यः स्यात्संपूर्णः स्वमेलजः।
षड्जग्रहांशकन्यासः सायमेष प्रगीयते॥

अस्यारोहे गांधारलङ्घनम् , इतरे सरलतया ऽऽगच्छन्ति । उदाहरणम्—धससरि रिममप पधप निधधपपा धपमपमगारिरिग सगरिरिसनीसा इत्युद्ग्रहप्रयोगः । धनिधधममम्मधधसनिध निसा धनिधप ममम्म इति ठायप्रयोगः ।

॥ इति सामवरालीरागः ॥

गांधारपञ्चमः सामवरालीमेलसंभवः ।
संपूर्णः सग्रहन्यासः सायंकाले प्रगीयते ॥

अस्यारोहावरोहयोः स्वरगतिर्दूरसंगतिका । उदाहरणम्—पागागारीरीसा रिगधससा सनिसा गापपा ससधप गरिरिसास्स इति तारषड्जतानप्रयोगः ।

॥ इति गांधारपञ्चमरागः ॥

मेलात्सामवराल्यास्तु जातो ऽयं भिन्नपञ्चमः ।
संपूर्णः सग्रहः सांशः सायमेष प्रगीयते ॥

अस्यारोहावरोहयोः स्वराणां दूरसंगतिः । उदाहरणम्—सानिरि सरिगागगगधपामपगसीरीरस धधनिस धामप गगप गगरिरिसारि धनिरिसास्स इति तारषड्जताने प्रयोगः । ससनिस धाधध धपपाधप निसानिसास्स इत्यवरोहिषड्जताने प्रयोगः ।

॥ इति भिन्नपञ्चमरागः ॥

शुद्धाः स्युः सरिमपधा गांधारो ऽन्तरसंज्ञकः ।
कैशिक्याख्यनिषादश्चेत्येतैः सप्तस्वरैर्युतः ॥
वसन्तभैरवीरागमेलः स्यात्पञ्चमो ऽल्पकः ।
मध्यमग्रामजन्यत्वसंदेहं जनयत्ययम् ॥
वसन्तभैरव्येतस्मिंस्तथा ललितपञ्चमः ।

अस्मिन् राग आरोहे सरिगमेति नागच्छति, अवरोहे पवर्ज्यम् । उदाहरणम्—रीरीसनिध निधम निनिससा मममम निधमसास्स निधनिसा निनिधम मपममगरिरिसा निनिधमगा मधमधनिसा गमपमागरीरिस रिरिसा धनिनिसास्स इति तारषड्जतानप्रयोगः । रिरिरिसनिधनि रिरिसनिधनि अस्मिन् ठाये मधनिस मगरिरिरिस मानिधम गमपमागा रिरिरिसा निसा इति प्रयोगो ऽस्ति ।

नि ध नि सा रि स रि ग मा   ग म प म ग मा धा नि सा सा   नि नि-
अ य ती यं व र य अ आ   अ अ अ अ अ आ अ अ रे रे   मं
ध ध म ग म प म ग   मगरिसा इति गीतप्रयोगः ।
थ न गि रि धी इ र

॥ इति वसन्तभैरवीरागः ॥

वसन्तभैरवीमेलजातो ललितपञ्चमः ॥
संपूर्णः सग्रहन्यासः प्रातर्गेयः शुभप्रदः ।

अस्यारोहावरोहयोः स्वरगतेरुदाहरणम्—सरिगमधमम धानीसा सनिधापमगमागरिसा इत्यालापप्रयोगः । अस्मिन् रागे दरवः श्लोकवर्णा बहवः सन्ति ।

॥ इति ललितपञ्चमरागः ॥

शुद्धाः स्युः सरिमपधा गः साधारणसंज्ञकः ॥
काकल्याख्यनिषादश्च ह्येतैः सप्तस्वरैर्युतः ।
मेलः स्याद्भिन्नषड्जस्य भिन्नषड्जादयः पुनः ॥
केचिद्रागा भवन्त्यत्र भिन्नषड्जः स लक्ष्यते ।
भिन्नषड्जः स्वमेलोत्थः संपूर्णः सग्रहांशकः ॥
रिन्यासः प्रथमे यामे गेयो ऽह्नो गीतवेदिभिः ।

अस्यारोहावरोहयोः स्वरगतेरुदाहरणम्—गगगरिसरि मपधधपाप्पम पमगरिस इति येडुपुप्रयोगः । साधसा रिगगगरि पामपधनिसा ससानिधप पधपधपमा गगगरि सरिसरिसध रिरिसनिस्सा इति तारषड्जतानप्रयोगः । गरिस्सरिसनि धपध अस्मिन् ठाये निसरिगरिगमागगगरि इत्येकः प्रयोगः । गारिसरिगम पमगगगरि इति द्वितीयः प्रयोगः । सनिधपप धधपमगगरिस गगरिगारिमपधप धनिसा इत्येकठायप्रयोगः ॥

ध ध प ध नि स रि ग रि स   ध प ध प म प ध प नि सा सा
अ नि मि ष रु म ना र सिं ह   अ ल लि त प भ अ अ अ औ रु
इत्येकगीतप्रयोगः । धगगागसनिधपमगरिस इत्यन्यगीतप्रयोगः ।

॥ इति भिन्नषड्जरागः ॥

भूपालो भिन्नषड्जीयमेलोत्थो मनिवर्जितः ॥
औडुवः सग्रहांशश्च प्रातर्गेयः शुभप्रदः ।

अस्यारोहावरोहयोः स्वरसंचारस्योदाहरणम्—ससरिगगरि गधधपाप धपगा पधधस्सा धपपधपगगरि इत्युद्ग्रहप्रयोगः। गरिसरिरिसध पधसरिग रिसरिरिसध इति ठायप्रयोगः। गपधसधध पगगरिरिस ? नरसिंह भवतए भरदिहनुमनितहरगयदआअटि इति गीतप्रयोगः। गपधस ससधप धधपग रिगरिस इति सुलादिप्रयोगः।

॥ इति भूपालरागः ॥

शुद्धाः स्युः समपा यत्र रिषभः षट्श्रुतिस्तथा ॥
अन्तराख्यानगांधारः पञ्चश्रुतिकधैवतः।
काकल्याख्यनिषादश्च स स्याद्देशाक्षिमेलकः ॥
देशाक्षीप्रमुखा रागा अत्र मेले भवन्ति हि।
देशाक्षीरागः संपूर्णः स्वमेलोत्थश्च सग्रहः ॥
सन्यासः प्रातःकाले तु गेयः संगीतकोविदैः।

अस्यारोहावरोहयोः स्वरसंचारस्योदाहरणम्—गपाधसा मममरि सससनि पधरि पाध सनिपपममरिस इत्युद्ग्रहप्रयोगः। रिससनिध सस्सा धधपधसस्स इत्येकस्मिन् ठाये प्रयोगः। धसनिपममरि पधनिसरिसनि धसनिपमगरि इति ठायान्तरप्रयोगः।

ग प ध स्स स स स्स ध स स रि स नि ध सा स्स
च तु रु द श भु व ना धी श वे ङ्क टे श
इति गीतप्रयोगः।

ग प ध सा स नि ध रि स स स नि प ग प ध स सरिससनिध।
तो डि द यं दं दं दं त धि मि कि ट अं गिं णिं गि

॥ इति देशाक्षीरागः ॥

समपाः स्युस्त्रयः शुद्धाः षट्श्रुत्यृषभसंज्ञकः ॥
अन्तराख्यानगांधारः पञ्चश्रुतिकधैवतः।
कैशिक्याख्यनिषादश्चेत्येतत्सप्तस्वरैर्युतः ॥
छायानाटस्य मेले ऽस्मिन्नेतदाद्या भवन्ति हि।
छायानाटः स्वमेलोत्थः संपूर्णः सग्रहांशकः ॥
उपाङ्गं सायमेवैष गेयः संगीतकोविदैः।

अस्यारोहावरोहयोः स्वरगतेरुदाहरणम्—रिगमपधनिप धनीस्सा सनिधनिपा पमरिगमरिस सनिनिपनिनीस्सा इत्यालापप्रयोगः।

॥ इति च्छायानाटरागः ॥

शुद्धौ सपौ च रिषभः पञ्चश्रुतिकसंज्ञकः ॥
शुद्धमध्यमगांधारस्ततः स्यादुच्चमध्यमः।
लौकिको ऽसौ शास्त्रतो विकृतपञ्चममध्यमः ॥
षट्श्रुतिर्धैवतश्च स्यात्काकल्याख्यनिषादकः।
एतैः सप्तस्वरैर्युक्तः सारङ्गस्य हि मेलकः ॥
सारङ्गप्रमुखा रागा अत्र केचिद्भवन्ति हि।
शुद्धस्य मध्यमस्यात्र गांधारत्वेन कीर्तनात् ॥
शुद्धमध्यमगांधारसंज्ञा ऽस्यैव मया कृता।
तथा चोक्तं विट्ठलेन शास्त्रानुभवशालिना ॥
'अस्याः स्वराः स्वपूर्वतः संचरन्त्युत्तरोत्तरम्।
तिस्रो गतीस्ते प्रत्येकं याति गश्च चतुर्गतीः ॥'

इति।

एवं षाडवमित्याहुः षट्स्वराणां प्रयोगतः।
द्वौ शुद्धविकृतावत्र प्रयुज्येते हि मध्यमौ ॥
इत्युक्तः पूर्वपक्षो ऽयं तथा काव्यप्रयोगतः।
शुद्धस्य मध्यमस्यात्र गांधारत्वेन कीर्तनात् ॥
संपूर्णो राग एवायं विट्ठलेनैवमीरणात्।

* * * * * * *

इति श्रीराजाधिराजभोसलकुलतिलकतुलजामहाराजविरचिते
संगीतसारामृते रागविवेकप्रकरणं
दशमम्

## अथ वाद्यप्रकरणम् (११)

वीणापाणिं शिवं नत्वा तुलजानृपचन्द्रमाः ।
सम्यक्प्रकाशयत्येष वाद्यप्रकरणोत्पलम् ॥
वाद्यं चतुर्विधं लोकप्रसिद्धमपि लक्षणम् ।
निरूप्यते ऽत्र बोधार्थं चतुर्णां क्रमतः पृथक् ॥
वाद्यं तन्त्रीततं वाद्यं सुषिरं सुषिरात्मकम् ।
चर्मावनद्धवदनमवनद्धमितीरितम् ॥
घनो मूर्तिः सा ऽभिघाताद्वाद्यते यत्र तद्धनम् ।
इत्येषां लक्षणं प्रोक्तं मुनिभिर्भरतादिभिः ॥
तत्र गीतं ततेनापि सुषिरेण च जायते ।
श्रुत्यादिद्वारतो जातमवनद्धेन रज्यते ॥
तथैव मीयते गीतं घनेन च विशेषतः ।
ततं नाम भवेद्वीणा सा द्विधा परिकीर्त्यते ॥
तत्र स्वरप्रकरणे श्रुतिवीणोदिता पुरा ।
वक्ष्यते स्वरवीणा ऽत्र वाद्यवीणेति चोच्यते ॥
अत्रापि श्रुतिबोधस्योपायः कश्चिन्मयोच्यते ।

अत्र सूक्ष्मबुद्धयः अस्यामपि स्वरवीणायां दण्डादिषु स्वरप्रदेशानां चतुःसंख्याकादिकान् भागाञ्श्रुतीनां न्यूनाधिकभावो यथा न भवति तथा चिह्नितान् कृत्वा तीव्रादिसंज्ञिकाः श्रुतीराविर्भावयितुं शक्नुवन्तीति । तदुक्तं रत्नाकरे—

ततं वीणा द्विधा सा च श्रुतिस्वरविवेचनात् ।
तत्र श्रीशार्ङ्गदेवेन श्रुतिवीणोदिता पुरा ॥
वक्ष्यते स्वरवीणा ऽत्र तस्यामपि विचक्षणाः ।
अङ्कित्वा स्वरदेशानां भागानुद्भिन्दते श्रुतीः ॥'

इति ।

इयं पुनर्बहुविधा ह्येकतन्त्र्यादिभेदतः ।

यथोक्तं रत्नाकरे—

तद्भेदास्त्वेकतन्त्री स्यान्नकुला च त्रितन्त्रिका ।
चित्रा वीणा विपञ्ची च ततः स्यान्मत्तकोकिला ॥
आलापिनी किंनरी च पिनाकीसंज्ञिका परा ।
निःशङ्कवीणेत्याद्याश्च शार्ङ्गदेवेन कीर्तिताः ॥

॥ इति ततवाद्यभेदाः ॥

वंशः पावः पाविका च मुरली मधुकर्यपि ।
काहलीतुण्डकिन्यौ च शुष्का शृङ्गमतः परम् ॥
शङ्खादयश्च वाद्यस्य सुषिरस्य भिदा मताः ।

॥ इति सुषिरवाद्यभेदाः ॥

पटहो मर्दलश्चाथ हुडुक्काकरटाघटाः ॥
घडसो ढवसो ढक्का कुडुक्का कुडुपा तथा ।
रुञ्जा डमरुको ढक्का मण्डी ढक्का च ढक्कुली ॥
सेल्लुका झल्लरी घाणा त्रिवली डुण्डुभिस्तथा ।
भेरीनिःसाणतम्बट्टा भेदाः स्युरवनद्धगाः ॥

॥ इत्यवनद्धवाद्यभेदाः ॥

तालो ऽथ कांस्यतालः स्याद्घण्टा च क्षुद्रघण्टिका ।
जयघण्टा ततः कम्रा शुक्तिपाटादयस्तथा ॥
प्रभेदा घनवाद्यस्य प्रोक्ताः सोढलसूनुना ।

॥ इति घनवाद्यभेदाः ॥

पुनश्चतुर्विधं वाद्यं वक्ष्ये लक्ष्यानुसारतः ।
शुष्कं गीतानुगं नृत्तानुगमन्यद् द्वयानुगम् ॥
चतुर्धेति मतं वाद्यं तत्र शुष्कं तदुच्यते ।
यद्विना गीतनृत्ताभ्यां तद्गोष्ठीत्युच्यते जनैः ॥
ततः परं तु त्रितयं भवेदन्वर्थनामकम् ।
वाद्यं दक्षाध्वरध्वंसोद्वेगत्यागाय शंभुना ॥
चक्रे कौतुकतो नन्दिस्वातितुम्बुरुनारदैः ।
अभिषेके नरेन्द्राणां यात्रायामुत्सवे तथा ॥
मङ्गलेषु च सर्वेषु विवाहोपनयादिषु ।
उत्पाते संभ्रमे युद्धे नाटके वीररौद्रिणि ॥

सर्वातोद्यानि वाद्यन्ते कानिचित्तल्पमङ्गले ।
विश्रान्तौ रङ्गसंस्थानां गायतां नृत्यतामपि ॥
एतान्युत्साहकारीणि वीराणां मङ्गलाय च ।
कुर्वन्ति हृदयस्फूर्तिं दुःखमुन्मूलयन्ति च ॥
गीतनृत्तगतन्यूनप्रच्छादनपटून्यपि ।
वाद्यान्यतस्ततादीनि तत्रादौ ब्रूमहे ततम् ॥
तस्य वादनभेदांश्च विविधाः करसारणाः ।
सुषिरं पटहं तस्य पाटांस्तद्रचनास्तथा ॥
पाटप्रभववाद्यानि प्रबन्धान्वाद्यसंश्रयान् ।
मर्दलाख्यं ततो वाद्यं भेदान्मार्दलिकस्य च ॥
गुणान्दोषांश्च तद्वृन्दं स्वरूपस्य च लक्षणम् ।
हुडुक्काद्यवनद्धानां स्वस्वपाटसमन्वितम् ॥
घनस्य च गुणान्दोषान्वाद्यवादकसंगतान् ।
हस्तयोश्च गुणानत्र वाद्याध्याये यथाक्रमम् ॥
अङ्गुष्ठपर्वदैर्घ्यं स्यादङ्गुलं द्वादशाङ्गुलम् ।
वितस्तिस्तद्द्वयं हस्तो वाद्यभाण्डमितौ भवेत् ॥
ग्रन्थिव्रणभिदाहीनः श्लक्ष्णः खादिरदारुजः ।
सुवृत्तः सरलो दण्डो वितस्तिपरिधिर्भवेत् ॥
त्रिहस्तदैर्घ्यस्तावच्च सुषिरं दधदन्तरा ।
सार्धाङ्गुलपरीणाह ऊर्ध्वाधो वदने तथा ॥
कनिष्ठाङ्गुलिमानं च गर्भे रन्ध्रत्रयं दधत् ।
त्रेताऽग्निसंस्थितं यद्वा द्वे रन्ध्रे तर्जनीमिते ॥
एकमेव त्वधः शङ्कुस्थाने सार्धाङ्गुलायतम् ।
दधानः ककुभं सारं खादिरं वा ऽन्यदारुजम् ॥
तिर्यक्संस्थेन दैर्घ्येणाष्टाङ्गुलं त्र्यङ्गुलायतम् ।
अङ्गुलाधिकपार्श्वं च मध्ये कूर्मोन्नताकृतौ ॥
स्थितेन पत्रिकाधारगर्तेन च समन्वितम् ।
गर्तमध्ये च रन्ध्रेण योन्याकारेण संयुतम् ॥
रन्ध्रे तत्र निविष्टेन रन्ध्रस्थौल्येन शङ्कुना ।
अन्वितां पत्रिकां मिश्रलोहजां त्र्यङ्गुलायताम् ॥

चतुरङ्गुलदैर्घ्यां च मध्ये कूर्मोन्नतां बहिः ।
निम्नमध्यं मनाग्गर्तं धारयन्तमधः पुनः ॥
द्विदण्डिकं शङ्कुना ऽष्टाङ्गुलदैर्घ्ययुजा तथा ।
वृत्तेन त्र्यङ्गुलस्थूलोत्तरार्धश्लक्ष्णमूर्तिना ॥
कूर्मपृष्ठोन्नतं मध्यमुत्तरार्धस्य बिभ्रता ।
दण्डवत्क्रमतः स्थौल्योदरभागयुतेन च ॥
दण्डवक्त्रप्रविष्टाधोभागेन च विराजितम् ।
एवंविधस्य दण्डस्योर्ध्वाग्रात्सप्तदशाङ्गुले ॥
अधोभागे ऽक्षिसदृशं विधाय विवरद्वयम् ।
एकद्वित्रिगुणां तन्त्रीं क्षिप्त्वा रन्ध्रे परत्र तु ॥
तन्त्रीप्राप्तान्तरे क्षिप्त्वा प्रोतं तद्द्विगुणे ततः ।
द्विगुणाकर्षणोत्कर्षे पुनरेवं समाचरेत् ॥
षष्ट्यङ्गुलपरीणाहं सुपक्वं वर्तुलं च यत् ।
तुम्बं स्याच्छदने तस्या वदनं द्वादशाङ्गुलम् ॥
वृन्तस्थानस्थया नाभ्या ऽधोमुख्या मध्यरन्ध्रया ।
त्र्यङ्गुलायतया युक्तं पृष्ठसंश्लिष्टया तया ॥
तुम्बकं मध्यरन्ध्रं स्यात्कर्परं नारिकेलजम् ।
अन्तःस्थरन्ध्रसंलग्नपृष्ठमध्येन रन्ध्रिणा ॥
तं दधद्रन्ध्रमध्ये ऽथ तन्त्रीप्रान्तौ निवेशितौ ।
संवेष्ट्य कीलके ऽन्तस्तत्कीलकं भ्रामयेन्मुहुः ॥
तावद्यावद्दृढो बन्धस्तुम्बकस्यैव जायते ।
एवं तुम्बकमुत्तानं दण्डे तज्ज्ञैर्निबध्यते ॥
दोरकं नागपाशेन द्विगुणेनान्वितं ततः ।
सुबलश्लक्ष्णसूत्रोत्थं दण्डे तुम्बोर्ध्वदेशतः ॥
संवेष्ट्य नागपाशे ऽस्मिन्बद्धप्रान्तां दृढां घनाम् ।
श्लक्ष्णां स्नायुमयीं तन्त्रीं कृष्ट्वा संपीड्य पत्रिकाम् ॥
तन्त्र्या संवेष्ट्य ककुभं निबध्नीयाद् दृढं ततः ।
वैणवी यवविस्तारा तन्वी त्र्यङ्गुलदैर्घ्यभाक् ॥
तन्त्रीपत्रिकयोरन्तर्जीवा नादस्य सिद्धये ।
संदिग्धपत्रिका तन्त्रीश्लेषं क्षेप्या कला च सा ॥

या पक्वेणुवल्कोत्था दोरिका त्रिवृता शुभा ।
कनिष्ठाङ्गुलिविस्तारा द्वादशाङ्गुलदैर्घ्यभाक् ॥
सुवृत्ता मसृणा तुम्बादधस्तादङ्गुलत्रये ।
दण्डे संवेष्टयेन्मन्द्रस्वरस्थानोपलक्षितम् ॥
यत्राभिदधिरे धीरास्तां वीणामेकतन्त्रिकाम् ।
प्रकृतिः सर्ववीणानामेषा श्रीशार्ङ्गिणोदिता ॥
दर्शनस्पर्शने चास्या भोगस्वर्गापवर्गदे ।
पुनीतो विप्रहत्याऽऽदिपातकैः पतितं जनम् ॥
दण्डः शंभुरुमा तन्त्रीः ककुभः कमलापतिः ।
इन्दिरा पत्रिका ब्रह्मा तुम्बं नाभिः सरस्वती ॥
दोरको वासुकिर्जीवा सुधांशुः सारिका रविः ।
सर्वदेवमयी तस्माद्वीणेयं सर्वमङ्गला ॥

अथ वीणाया धारणप्रकारः—

अधस्तुम्बमधोवक्त्रमूर्ध्वे तन्त्री यथा भवेत् ।
तथा ऽस्या दोरिकादेशं वामस्कन्धे निधाय च ॥
ककुभं दक्षिणस्याङ्घ्रेः पाष्ण्या संधार्य यत्नतः ।
न्यस्तां पृष्ठे कनिष्ठाया वामहस्तस्य कम्रिकाम् ॥
सारणात्सारणेत्युक्तामनामाङ्गुलिवेष्टिताम् ।
आकुञ्च्य मध्यमां पार्श्वलग्नां तर्जनिकां ततः ॥
निपीड्योरःस्थलासन्नां तन्त्रीमध्ये निधाय च ।
ऊर्ध्वाधः सारयेन्नादसिद्ध्यै हस्तं तु दक्षिणम् ॥
त्यक्त्वा वितस्तिं जीवातस्तन्त्रीं विन्यस्य सारयेत् ।
अन्यत्रोपरिवाद्यान्तं नोर्ध्वं वक्षःस्थलान्नयेत् ॥
कम्रिका तत्क्रिया चोक्ता सारणा सा चतुर्विधा ।
उत्क्षिप्ता संनिविष्टाख्योभयी स्यात्कम्पितेत्यपि ॥
श्लिष्टा तन्त्रीर्यदोत्प्लुत्य निपतेत्सारणान्मुहुः ।
ततोत्क्षिप्तासंनिविष्टा स्पृष्ट्वैव सरणे भवेत् ॥
क्रमादेतद्द्वयाभ्यासादुभयी सारणा मता ।
स्वरस्थाने कम्पनेन कम्पिता कम्रिकोच्यते ॥

घातः पातश्च संलेखस्ततोल्लेखावलेखकौ ।
भ्रमरः संधितश्छिन्नो नवमी नखकर्तरी ॥
व्यापारा दक्षिणस्यैते पाणेर्वामस्य तु द्वयम् ।
स्फुरितः खसितश्चेति व्यापाराः करयोस्त्वमी ॥
घोषो रेफोऽथ बिन्दुः स्यात्कर्तरी चार्धकर्तरी ।
निष्कोटिताख्यः स्खलितः शुकवक्त्रश्च मूर्च्छना ॥
तालहस्तोर्ध्वचन्द्रश्च प्रसारः कुहरोऽपरः ।
त्रयोदशेति सर्वेऽमी स्युश्चतुर्विंशतिर्युताः ॥
करनामान्यपीमानि मन्वते वाद्यवेदिनः ।
घातः स्यान्मध्यमाक्रान्ततर्जन्या तन्त्रिकाऽऽहतिः ॥

॥ इति घातः ॥

घातः केवलया पातः

॥ इति पातः ॥

संलेखोऽन्तस्थया हृतिः ।

॥ इति संलेखः ॥

अन्तर्मध्यमया घातमुल्लेखं संप्रचक्षते ॥

॥ इत्युल्लेखः ॥

अवलेखो मध्यमया स्यात्तन्त्रीताडनं बहिः ।

॥ इत्यवलेखः ॥

अङ्गुल्या ऽन्योन्यया प्राहुरुल्लेखं चावलेखकम् ॥
सर्वाभिस्तिसृभिर्द्वाभ्यामथ वेति च ते जगुः ।
अन्तर्बहिर्मुखौ घातौ तयोस्ते ब्रुवते क्रमात् ॥

॥ इति प्रकारान्तरेणोल्लेखावलेखौ ॥

भ्रमरोऽन्तःक्रमाच्छीघ्रं चतुरङ्गुलिताडनम् ।

॥ इति भ्रमरः ॥

मध्यमाऽनामिकाभ्यां तु बहिर्यातोऽत्र संधितः ॥

॥ इति संधितः ॥

तर्जनीपार्श्वलग्नायास्तन्व्या बहिरनामया ।
हननाच्छिन्नमाचष्ट श्रीमत्सोढलनन्दनः ॥

॥ इति च्छिन्नः ॥

क्रमाद् द्रुतं नखैर्घातश्चतुर्भिर्नखकर्तरी ।
॥ इति नखकर्तरी ॥
॥ इति नव दक्षिणहस्तव्यापाराः ॥

स्फुरितः कम्पनं तन्त्रीपार्श्वलग्नप्रसारणात् ॥
॥ इति स्फुरितः ॥

मुहुः सारणया तन्त्रीघर्षणं कसितो मतः ।
॥ इति वामहस्तव्यापारद्वयम् ॥

तन्त्री लग्नाङ्गुष्ठपार्श्वा कर्तरीत्र तु हन्यते ।
कनिष्ठासारणाभ्यां वा यत्रासौ घोष उच्यते ॥
॥ इति घोषः ॥

दक्षिणानामया यत्र त्वन्तस्तन्त्रीर्निहन्यते ।
वामस्य मध्यमाऽङ्गुल्या बहिस्तं रेफमूचिरे ॥
॥ इति रेफः ॥

अनामया बहिस्तन्त्रीघाताज्जातो यदा ध्वनिः ।
तर्जन्या धार्यते बिन्दुर्निःशङ्केनोदितस्तदा ॥
॥ इति बिन्दुः ॥

अङ्गुलीभिश्च तिसृभिः क्रमेण करयोर्द्वयोः ।
बहिस्तन्त्रीहतिस्तूर्णं कर्तरी कीर्तिता बुधैः ॥
॥ इति कर्तरी ॥

दक्षिणः कर्तरीं कुर्याद्वामहस्तस्तु तन्त्रिकाम् ।
यत्र सारणया हन्ति प्राहुस्तामर्धकर्तरीम् ॥
॥ इत्यर्धकर्तरी ॥

उत्सृज्य सारणां यत्र हन्ति तन्त्रीं प्रदेशिनी ।
निष्कोटिताभिधं पाणिममुं वाद्यविदो विदुः ॥
॥ इति निष्कोटितः ॥

उत्क्षिप्तया सारणया वामस्तन्त्रीं द्रुतं यदा ।
निहन्ति कर्तरी तु स्याद्दक्षिणः स्खलितस्तदा ॥
॥ इति स्खलितः ॥

तन्त्रीकर्षो ऽङ्गुष्ठतर्जन्यग्राभ्यां शुकवक्त्रकः ।

॥ इति शुकवक्त्रः ॥

उद्वेष्टपरिवर्ताभ्यां तन्त्र्या भ्राम्यति दक्षिणे ॥
स्वरस्थाने द्रुतं कम्प्रा सारणं मूर्च्छना मता ।

॥ इति मूर्च्छना ॥

तलेन दक्षिणो हस्तस्तन्त्रीं हन्तीतरः पुनः ॥
प्रदेशिन्या स्पृशेद्यत्र तलहस्तो भवेदसौ ।

॥ इति तलहस्तः ॥

स्पर्शो ऽङ्गुष्ठकनिष्ठाभ्यामर्धचन्द्रो ऽभिधीयते ॥

॥ इत्यर्धचन्द्रः ॥

चतुरङ्गुलिसंघाते कुञ्चिताङ्गुष्ठके तले ।
कनिष्ठातर्जनीपार्श्वस्पर्शस्तन्त्र्याः प्रसारकः ॥

॥ इति प्रसारकः ॥

करस्य किंचित्साङ्गुष्ठसकलाङ्गुलिकुञ्चने ।
कनिष्ठाङ्गुष्ठसंस्पर्शस्तन्त्र्याः स्यात्कुहरः करः ॥

॥ इति कुहरः ॥

॥ इति त्रयोदशोभयहस्ताः ॥

एतद्धस्तसमायोगाद्वादनं वाद्यमुच्यते ।
वाद्यं दशविधं प्रोक्तं मुनिभिर्भरतादिभिः ॥
तल्लक्षणं तु सोद्देशं वक्ष्ये मन्दविबुद्धये ।
छन्दो धारा कैकुटी च कङ्कालं वस्तु च द्रुतम् ॥
गजलीलं दण्डकं चोपरि वाद्यमतः परम् ।
वाद्यं पक्षिरुतं चेति दशधा परिकीर्तितम् ॥
स्खसितस्फुरितौ यत्र क्रियेते बहुधा करौ ।
तारश्च स्पृश्यते स स्याच्छन्दो यतिमनोहरः ॥

॥ इति च्छन्दः ॥

स्खलिता मूर्च्छना चाथ कर्तरीरेफसंयुतौ ।
उल्लेखरेफौ यत्रास्तां धारां ब्रूते हरप्रियः ॥

॥ इति धारा ॥

शुकवक्त्रः स्फुरितको घोषः स्यादर्धकर्तरी ।
क्रमादेते करा यत्र तामाहुः कैकुटीं बुधाः ॥
॥ इति कैकुटी ॥

स्फुरितैर्मूर्च्छनासंज्ञैः कर्तरीत्रितयेन च ।
युक्तं करैः क्रमादेभिः कङ्कालं कथितं बुधैः ॥
॥ इति कङ्कालम् ॥

स्पृष्टतारमुपेतं यत्कर्तर्या खसितेन च ।
कुहरेणाथ तद्वाद्यं वस्तु वस्तुविदो विदुः ॥
॥ इति वस्तु ॥

कर्तरीखसितौ यत्र क्रमेण कुहरः करः ।
रेफभ्रमरघोषाश्च तद् द्रुतं ब्रुवते बुधाः ॥
॥ इति द्रुतम् ॥

बहुधा मूर्च्छनाहस्ताः स्फुरिताः कर्तरी ततः ।
खसितो यत्र तत्प्राहुर्गजलीलं कलाविदः ॥
॥ इति गजलीलम् ॥

स्खलितो मूर्च्छनाऽऽख्यश्च कर्तरीरेफसंयुतः ।
खसितो यत्र वाद्यज्ञा दण्डकं तद्वभाषिरे ॥
॥ इति दण्डकम् ॥

ऊर्ध्वाधोगौ क्रमाद्धस्तौ रेफकर्तरिकाऽऽह्वयौ ।
निष्कोटिते तले हस्ते द्वावप्युपरिवाद्यके ॥
॥ इत्युपरिवाद्यकम् ॥

समस्तहस्तवाद्यं तु वाद्यं पक्षिरुतं मतम् ।
॥ इति पक्षिरुतम् ॥

॥ इति दशविधं वाद्यम् ॥

सकलं निष्कलं चेति द्विविधं वाद्यमुच्यते ।
तन्त्रीसंलग्नजीवातः स्थूलो यत्र ध्वनिर्भवेत् ॥
तदुक्तं सकलं वाद्यमपरे त्वन्यथा जगुः ।
आद्योरिकं पत्रिकं चेत्तर्जनीस्पर्शवर्जितम् ॥

सार्यते कम्रिकावाद्यं तदाहुः सकलाभिधम् ।
अपनीय कलां कम्रामधो नैषाददेशतः ॥
न नयेत्तर्जनीस्पर्शं तन्त्र्याश्चेन्निष्कलं तदा ।
सूक्ष्मश्चात्र भवेन्नादः सारणामत्र केचन ॥
आमध्यमस्वरस्थानं सारणायां प्रपेदिरे ।
अवोचदिति निःशङ्कः शिष्याभ्यासाय वादनम् ॥
श्रुत्यादिक्रमतो गीतनिष्पत्त्यै त्विदमादिशेत् ।
वक्ष्यामः स्वररन्ध्राणां यद्वंशे ऽष्टादशाङ्गुले ॥
प्रथमे सप्तके स्थानं वीणायामपि तन्मतम् ।
स्वराणां किं तु वैणानामधराधरतारता ॥
मध्यमे सप्तके स्थानं ततः स्याद् द्विगुणान्तरम् ।
तृतीये सप्तके स्थानं ततो ऽपि द्विगुणान्तरम् ॥
अङ्केत च स्वरस्थानान्यमूनि सुखबुद्धये ।
यथास्वं स्वरभेदानां विभागाच्छ्रुतिदेशधीः ॥
स्याद् ग्राममूर्च्छनाऽऽदीनामुद्बोधः सुकरस्ततः ।
एषा ऽपि जनकप्रोक्ता घोषकश्चैकतन्त्रिका ॥

॥ इत्येकतन्त्रीलक्षणम् ॥

इयं तु मध्यमेलाख्यवीणाऽन्तरमितीरिता ।

तथा हि—शुद्धमेला मध्यमेलेति वीणा द्विविधा । तत्र शुद्धमेलवीणालक्षणं चतुर्दण्डीप्रकाशिकायाम्—

लक्ष्यज्ञेन प्रवीणेन निर्मितायां तु शिल्पिना ।
वीणायामुपरिस्थाने चतुस्तन्त्रीं प्रसारयेत् ॥
पित्तलारचिते चाद्यद्वितीये लोहजे परे ।
पार्श्वोपरिस्थतन्त्रीणां वामे चतसृणामपि ॥
आद्यायां मन्द्रषड्जाख्यं स्वरं तन्त्र्यां नियोजयेत् ।
ततः पञ्चमनामानं द्वितीयायां निवेशयेत ॥
तृतीयायां तन्त्रिकायां मध्यषड्जं निवेशयेत् ।
मध्यमध्यमनामानं तुरीयायां निवेशयेत् ॥

तिसृणां पार्श्वतन्त्रीणां स्वरयोजनमुच्यते ।
आद्या टीप्यभिधा तारषड्जतुल्यध्वनिर्भवेत् ॥
द्वितीया तन्त्रिका ज्ञेया मध्यपञ्चमसंमिता ।
तृतीया मध्यषड्जेन संमिता झिलिकाऽभिधा ॥
तिसृणामपि चैतासां श्रुतिसंज्ञा प्रकीर्तिता ।
पर्वणां संनिवेशो ऽथ वक्ष्यते लक्ष्यसंमतः ॥
मेरोः पुरस्तात्पर्वाणि षट् क्रमेण निवेशयेत् ।
षट्सु तेष्वाद्यया तन्त्र्या मन्द्रषड्जाभिधानया ॥
क्रमेण शुद्धरिषभः शुद्धगांधारकस्तथा ।
साधारणाख्यगांधारो गांधारो ऽन्तरसंज्ञकः ॥
शुद्धमध्यमनामा च वरालीमध्यमस्तथा ।
इति स्वराः प्रजायन्ते तन्त्र्या चाथ द्वितीयया ॥
मन्द्रपञ्चमनादिन्या षट्सु तेष्वेव पर्वसु ।
शुद्धश्च धैवतः शुद्धो निषादश्च ततः परम् ॥
कैशिक्याख्यनिषादश्च काकल्याख्यनिषादकः ।
षड्जर्षभौ च जायन्ते व्यस्तमेते स्वराः क्रमात् ॥
मध्यषड्जनिनादिन्या तन्त्र्या चाथ तृतीयया ।
सर्वेष्वेतेषु ये जातास्तान्स्वरान्कथयाम्यहम् ॥
शुद्धावृषभगांधारौ तथा साधारणाभिधः ।
गांधारो ऽन्तसंरज्ञश्च शुद्धमध्यम एव च ॥
वरालीमध्यमश्चेति जायन्ते क्रमशः स्वराः ।
मध्यमध्यमनादिन्या तन्त्र्या चाथ तुरीयया ॥
षट्सु पर्वसु चैतेषु स्वरान्समभिदध्महे ।
वरालीमध्यमः पूर्वः पञ्चमः शुद्धधैवतः ॥
ततः शुद्धनिषादश्च कैशिक्याख्यनिषादकः ।
काकल्याख्यनिषादश्चेत्येते स्युः क्रमशः स्वराः ॥
अस्यां तुरीयतन्त्र्यां यः काकली षष्ठपर्वजः ।
तदग्रे सप्त पर्वाणि यथायोगं निवेशयेत् ॥

तेषां प्रवाले दीर्घाणि त्रीणि पर्वाणि विन्यसेत् ।
सरिगाख्यास्त्रयस्तत्र प्रजायन्ते स्वराः क्रमात् ॥
पीठे ह्रस्वानि पर्वाणि चत्वारि विनिवेशयेत् ।
एतेषु मपधन्याख्याश्चत्वारः स्युः स्वराः क्रमात् ॥
शुद्धमध्यमदं ह्रस्वं पर्व पीठे यथा भवेत् ।
तथा प्रवाले पीठं च वैणिकैर्विनिवेश्यताम् ॥
एकं सर्वोत्तरं ह्रस्वं पर्व पीठे निवेशयेत् ।
तत्रातितारषड्जाख्यो द्वाविंशो ऽपि स्वरो भवेत् ॥
लक्ष्यज्ञैर्गृह्यते सो ऽयं रक्तिलाभैकलोभतः ।
शुद्धमेलाख्यवीणायामेतत्पर्वाष्टके पुनः ॥
द्वौ षड्जौ पञ्चमश्चेति ध्रुवं पर्वत्रयं सदा ।
अन्यानि पञ्च पर्वाणि तत्तद्रागानुसारतः ॥
क्रमाद्रिगमधन्याख्यस्वरोत्पादनसिद्धये ।
उत्पाद्योत्पाद्य वेश्यानि यथायोगं विचक्षणैः ॥
सर्वाण्याहृत्य दीर्घाणि नव ह्रस्वानि पञ्च च ।
एषैकरागमेलाख्यवीणैवं सति जायते ॥
अस्यां तुरीयतन्त्र्यां यः काकली षष्ठपर्वजः ।
तदग्रे शुद्धविकृतस्वराणां द्वादशात्मनाम् ॥
सिद्ध्यै द्वादश पर्वाणि विनिवेश्यानि वैणिकैः ।
अतितारख्यषड्जार्थं ह्रस्वं चान्यत्त्रयोदशम् ॥
तेषु प्रवाले दीर्घाणि पञ्च पर्वाणि विन्यसेत् ।
अष्ट पर्वाणि पीठे तु ह्रस्वानि विनिवेशयेत् ॥
अस्यां दीर्घाणि पर्वाणि मिलित्वैकादशाभवन् ।
अष्टौ ह्रस्वानि पर्वाणि समजायन्त तत्र तु ॥
तत्सर्वरागमेलाख्यवीणैवं सति जायते ।
लक्षितैवं शुद्धमेलवीणा भेदद्वयान्विता ॥
एतस्यामेव वीणायां स्वराणामेकविंशतेः ।
निरूपयामः स्थानानि स्वरांस्त्रेधा विभज्य च ॥

तत्रोपरि स्थितानां तु वामे चतसृणामपि ।
आद्यया मन्द्रषड्जाख्यतन्त्र्या तावच्चतुःस्वराः ॥
संग्राह्याः षड्जरिषभौ तथा गांधारमध्यमौ ।
पञ्चमाद्या न गृह्यन्ते तस्यां जाता अपि स्वराः ॥
मन्द्रपञ्चमनामा यो द्वितीयायां निवेशितः ।
तस्यां त्रयः स्वरा ग्राह्याः पञ्चमो धैवतश्च निः ॥
षड्जादयो न गृह्यन्ते जाता अपि ततः परम् ।
तदेवं मन्द्रके स्थाने स्वराः सप्त प्रदर्शिताः ॥
अथ मध्यस्थानके तु तृतीयायां त्रयः स्वराः ।
तुरीयायां तु चत्वारः सत्येवं स्थानगाः स्वराः ॥
तत्र स्युर्मध्यषड्जायां मध्यषड्जादयस्त्रयः ।
जाता अपि न गृह्यन्ते तदूर्ध्वं स्थानसिद्धये ॥
मध्यमध्यमनादिन्यां तुरीयायामपि स्वराः ।
चत्वार एव गृह्यन्ते मपधन्यभिधाः स्वराः ॥
मध्यस्थानगता एवं स्वराः सप्त प्रदर्शिताः ।
तस्यामेव तुरीयायां मध्यस्थाननिषादतः ॥
अग्रे षड्जादयः सप्त तारस्थानगताः स्वराः ।
संग्राह्या इति सप्रोक्तास्तारस्थानगताः स्वराः ॥
तन्मन्द्रमध्यताराख्यस्थानानां त्रितये स्वराः ।
प्रतिस्थानं सप्त सप्तेत्येकविंशतिरीरिताः ॥
द्वाविंशमतिताराख्यं चतुर्थमपि षड्जकम् ।
लक्ष्यज्ञाः परिगृह्णन्ति रक्तिलाभैकलोभतः ॥
स्थानप्रसङ्गे वैकाररामो बभ्राम तद्यथा ।
उपरिस्थचतुस्तन्त्रीष्वाद्यायां विनिवेशिते ॥
अनुमन्द्राख्यषड्जे ऽस्मिन्स्वराः सरिगमाभिधाः ।
चत्वारः समुपादेयास्त्वनुमन्द्राख्यपञ्चमः ॥
द्वितीयायां निवेश्यो ऽत्र पधनीति त्रयः स्वराः ।
ग्राह्यास्ततो ऽनुमन्द्राख्यस्थानगाः सप्त दर्शिताः ॥

स्वरास्तन्त्र्यां तृतीयायां मन्द्रषड्जो निवेश्यते ।
तस्यां सरिगनामानः संगृह्यन्ते त्रयः स्वराः ॥
तुरीयायां तन्त्रिकायां निवेश्यो मन्द्रमध्यमः ।
तस्यां तु मपधन्याख्याः संगृह्यन्ते चतुःस्वराः ॥
मन्द्रस्थानस्वराः सप्त तदेवं दर्शिता इति ।
नैतत्संगच्छते मन्द्रमध्यताराभिधानि हि ॥
त्रिस्थानानीति सकलसांगीतिकमतस्थितिः ।
आद्यद्वितीययोस्तन्त्र्योः स्वराः सप्त त्वयेरिताः ॥
अनुमन्द्राभिधे स्थाने तृतीयकतुरीययोः ।
मन्द्रस्थानगताः सप्त स्वराश्च परिकल्पिताः ॥
तत्पुरोवर्तिनः सप्त स्वरास्तावदमी पुनः ।
मध्यस्थानगताः किं वा तारस्थानगता उत ॥
न तावदाद्यस्ताराख्यस्थानभङ्गप्रसङ्गतः ।
न द्वितीयो ऽपि मध्याख्यस्थानाभावे कथं पुनः ॥
तारस्थानं प्रजायेतानुपनीतविवाहवत् ।
तस्मादस्माभिरुक्तैव रीतिः स्थानविभाजने ॥
मन्द्रादिष्वनुमन्द्रादिव्यवहारस्तु लौकिकः ।
गतानुगतिकन्यायाद्भ्रान्तिमात्रविजृम्भितः ॥
लक्षितेयं शुद्धमेलवीणा लक्ष्यानुसारतः ।
अथोच्यते मध्यमेलवीणाया लक्षणं मया ॥
तन्त्र्याद्या चानुमन्द्राख्यपञ्चमेन युता यदि ।
द्वितीया मन्द्रषड्जेन तन्त्रिका चेत्समन्विता ॥
मन्द्रपञ्चमसंयुक्ता तृतीया यदि तन्त्रिका ।
तुरीया मध्यषड्जेन तन्त्रिका चेत्समन्विता ॥
तदा भवेन्मध्यमेलवीणा पार्श्वे त्रितन्त्रिका ।
तिसृणां पार्श्वतन्त्रीणां वक्ष्ये ऽथ स्वरयोजनम् ॥
आद्या दीप्यभिधा तारषड्जतुल्यध्वनिर्भवेत् ।
द्वितीया तन्त्रिका ज्ञेया मध्यपञ्चमसंमिता ॥

तृतीया मध्यषड्जेन संमिता झिल्लिकाऽभिधा ।
इत्येवं मध्यमेलाख्यवादित्रस्वरयोजनम् ॥
अथास्याः पर्वसंदेशं वक्ष्ये लक्ष्यैकसंमतम् ।
मेरोः पुरस्तात्पर्वाणि षडस्यामपि विन्यसेत् ॥
तन्त्रीचतुष्टये चैवं प्रत्येकं षट्सु पर्वसु ।
ये स्वराः संप्रसूयन्ते क्रमशस्तान्प्रचक्ष्महे ॥
आद्यतन्त्र्या ऽनुमन्द्राख्यपञ्चमाश्रितया क्रमात् ।
शुद्धश्च धैवतः शुद्धो निषादश्च ततः परम् ॥
कैशिक्याख्यनिषादश्च काकल्याख्यनिषादकः ।
षड्जर्षभौ च जायन्ते षट्सु पर्वसु षट् क्रमात् ॥
तन्त्र्या द्वितीयया मन्द्रषड्जगर्जितया पुनः ।
शुद्धश्च रिषभः शुद्धगांधाराख्यः स्वरस्ततः ॥
साधारणाख्यगांधारो गांधारो ऽन्तरसंज्ञकः ।
शुद्धमध्यमनामा च वरालीमध्यमस्ततः ॥
क्रमादमी षट् स्वराः स्युः षट्सु तेष्वेव पर्वसु ।
मन्द्रपञ्चमशोभिन्या तन्त्र्या चाथ तृतीयया ॥
शुद्धश्च धैवतः शुद्धनिषादश्च ततः परम् ।
कैशिक्याख्यनिषादश्च काकल्याख्यनिषादकः ॥
षड्जः शुद्धर्षभश्चेति स्वराः षट्सु च पर्वसु ।
तन्त्र्या तुरीयया मध्यषड्जगर्जितया पुनः ॥
शुद्धश्च रिषभः शुद्धगांधाराख्यः स्वरस्ततः ।
साधारणाख्यगांधारो गांधारो ऽन्तरसंज्ञकः ॥
शुद्धमध्यमनामा च वरालीमध्यमस्ततः ।
एते स्वराः प्रजायन्ते षट्सु तेष्वेव पर्वसु ॥
वरालीमध्यमस्याग्रे त्रीणि पर्वाणि विन्यसेत् ।
पर्वसु त्रिषु चैतेषु तन्त्र्या तावत्तुरीयया ॥
क्रमेण संप्रसूयन्ते पधनीति त्रयः स्वराः ।
तदूर्ध्वं सप्त पर्वाणि विनिवेश्यानि तेष्वथ ॥

आद्यं तु दीर्घपर्व स्यात्प्रवाले तारषड्जकम् ।
रिगादिषट्स्वरोत्पत्त्यै ह्रस्वपर्वाणि षट् पुनः ॥
पीठे संवेशनीयानि तदग्रे पर्व सप्तमम् ।
अतिताराख्यषड्जस्य स्थितये विनिवेशयेत् ॥
शुद्धर्षभकरं ह्रस्वं पर्व पीठे यथा भवेत् ।
तथा प्रवाले पीठं च वैणिकैर्विनिवेश्यताम् ॥
मेरोः परस्ताद्यत्पर्व सप्तमं पञ्चमाभिधम् ।
अनेन सह जातानि पर्वाण्येकादश क्रमात् ॥
एतेषु तारषड्जातितारषड्जाख्यपर्वणी ।
द्वे पर्वणी पञ्चमयोश्चत्वारि स्युर्ध्रुवाणि हि ॥
अन्यानि सप्त पर्वाणि तत्तद्रागानुसारतः ।
उत्पाद्योत्पाद्य वेश्यानि सकलस्वरसिद्धये ॥
अस्यां दीर्घाणि पर्वाणि दश ह्रस्वानि सप्त च ।
एषैकरागमेलाख्यवीणैवं सति जायते ॥
प्रवाले दीर्घपर्वाणि वेश्यानि द्वादश क्रमात् ।
एकादश ह्रस्वपर्वाण्यथ पीठे निवेशयेत् ॥
सर्वस्थानेषु सकलस्वराणां सिद्धये यदि ।
तत्सर्वरागमेलाख्यवीणैवं सति जायते ॥
न कैशिकीनिषादोऽस्यामस्ति पीठस्थपर्वसु ।
वादयन्ति हि तत्स्थाने काकलीमेव वैणिकाः ॥
पीठेऽपि केचित्कैशिक्याः पर्व ह्रस्वं प्रकुर्वते ।
पीठे द्वादश पर्वाणि तेन जातानि तन्मते ॥
लक्षितैवं मध्यमेलवीणा भेदद्वयान्विता ।
एतस्यामपि वीणायां स्वराणामेकविंशतेः ॥
शुद्धायामिव मन्द्रादिस्थाननीतिविनिश्चयः ।
प्रथमादिषु तन्त्रीषु वद्धादित्येव निश्चयः ॥
तन्त्रीराद्याऽनुमन्द्राख्यपञ्चमेन समन्विता ।
मध्यमेलाख्यवीणायां तिस्रः स्थानविभाजने ॥

वरास्तद्गृक्लिलाभाय तां निबध्नन्ति वैणिकाः ।
मन्द्रषड्जादिकास्त्वेव तन्त्रिकासु तिसृष्वतः ॥
स्वरान्स्थानविभागेन दर्शयाम्येकविंशतिम् ।
तत्र तन्त्र्यां द्वितीयायां मन्द्रषड्जो निवेश्यते ॥
तस्यां ग्राह्याः सरिगमाश्चत्वारो न पधादयः ।
मन्द्रपञ्चमनामा यस्तृतीयायां निवेशितः ॥
तस्यां पधनिनामानो ग्राह्या न सरिगादयः ।
मन्द्रस्थानस्वराः सप्त तदेवं संप्रदर्शिताः ॥
मध्यषड्जसमेतायां तुर्यतन्त्र्यामथ स्वराः ।
सप्त ग्राह्याः सरिगमपधनीति क्रमादमी ॥
मध्यस्थानगता एते सप्त संदर्शिताः स्वराः ।
प्रवालस्थान्तिमस्थूलपर्वप्रभृतिषु स्वराः ॥
ग्राह्याः षड्जादयः सप्त पीठस्थह्रस्वपर्वसु ।
तारस्थानगता एवं स्वराः सप्त निदर्शिताः ॥
एकविंशतिरित्युक्ताः स्वराः स्थानत्रये स्फुटम् ।
एतेषु मन्द्रषड्जस्य ये स्वराः स्युरधस्तनाः ॥
ते ऽनुमन्द्राभिधस्थानस्वरा इति विनिर्णयः ।
ये ऽतितारस्थषड्जस्य स्वरस्याग्रे व्यवस्थिताः ॥
ते ऽतितारस्वरा ज्ञेया इति सर्वं समञ्जसम् ।
अत्रापि स्थानगणने रामो बभ्राम तद्यथा ॥
तन्त्रीराद्या ऽनुमन्द्राख्यपञ्चमेन युता यदि ।
द्वितीया मन्द्रषड्जेन तन्त्रिका संयुता यदि ॥
मन्द्रपञ्चमसंयुक्ता तृतीया तन्त्रिका यदि ।
तुरीया मन्द्रषड्जेन तन्त्रिका चेत्समन्विता ॥
तदा भवेन्मध्यमेलवीणेत्येतदसंगतम् ।
द्वितीयस्यां तन्त्रिकायां मन्द्रषड्जो निवेशितः ॥
पुनः कथं तुरीयायां मन्द्रषड्जो निवेश्यते ।
उच्चोच्चतरनादिन्यश्चतस्रः खलु तन्त्रिकाः ॥

द्वितीयतुर्ययोस्तासु द्वयोस्तन्त्रिकयोरपि ।
मन्द्रषड्जाभिधस्यैकस्वरस्य विनिवेशनम् ॥
अयुक्तमिति नैतत्किं पशुपालो ऽपि बुध्यते ।
तस्मादस्माभिरुक्तेन वर्त्मनैव विचक्षणैः ॥
ज्ञातव्यं मध्यमेलायां तन्त्रीषु स्वरयोजनम् ।
स्थानत्रयस्वराश्चोक्तवर्त्मना त्वेकविंशतिः ॥
एकविंशतिसंख्याकस्वरेष्वेतेषु वादकैः ।
गायकैश्च चतुर्दण्ड्यां ग्राह्याः सप्तदशैव तु ॥
तथा हि वादकाः सप्त मध्यस्थानगतान्स्वरान् ।
तारस्थानगतान्सप्त षड्जमप्यतितारगम् ॥
धनी च मन्द्रस्थानस्थावेवं सप्तदश स्वरान् ।
समादाय चतुर्दण्डीवादनं कुर्वते ऽखिलाः ॥
अयं च सारणीमार्गो वैणिकैः परिकल्पितः ।
मध्यस्थानस्थयोर्धन्योर्मध्ये त्वन्यतरः स्वरः ॥
गृह्यते सारणीमार्गे चतुर्दण्डीप्रसिद्धये ।
प्रायशस्तेन संजाताः षोडशैव स्वराः खलु ॥
तथा ऽपि मन्द्रस्थानस्थधन्याख्यस्वरयोर्द्वयोः ।
क्वचित्क्वचिदुपादानात्स्वराः सप्तदशेरिताः ॥
गायकास्तु स्वरान्सप्त मन्द्रस्थानसमुद्भवान् ।
मध्यस्थानस्वरान्सप्त तारषड्जं तथा परम् ॥
धनी चैवानुमन्द्रस्थावेवं सप्तदश स्वरान् ।
समादाय चतुर्दण्डीगानं सर्वे ऽपि कुर्वते ॥
अत्रापि चानुमन्द्रस्थधन्याख्यस्वरयोर्द्वयोः ।
सारणीमार्गसंबन्धी स्वरो ऽन्यतर ईरितः ॥
क्वाचित्कतामाभिप्रेत्य स्वराः सप्तदशेरिताः ।
एतेषामग्रतो ये स्युः स्वरा ये चाप्यधस्तनाः ॥
क्वचिद्गीतप्रबन्धादौ दृश्यन्ते ते स्वराः खलु ।
तत्पुनः संप्रदायज्ञैस्तानप्यादैरनादृतम् ॥

यद्येवं मध्यताराख्यस्थानगैरेव तु स्वरैः ।
निर्वाहः स्याच्चतुर्दण्ड्यां मन्द्रस्थानं वृथा भवेत् ॥
इत्याशङ्क्यैव मन्द्राख्यस्थानसाफल्यसिद्धये ।
पक्कसारणिमार्गो ऽयं वैणिकैः परिगृह्यते ॥
पक्कसारणिमार्गस्तु लक्ष्यतामिति चेच्छृणु ।
शुद्धमेलाख्यवीणायां पक्कसारिणिवर्त्मनि ॥
ये गृह्यन्ते विकल्पेन तान्स्वरानभिदध्महे ।
मन्द्रस्थानजुषां सप्तस्वराणां गणनाविधौ ॥
आद्यतन्त्र्या ग्रहीतव्याः स्वराः सरिगमाभिधाः ।
चत्वार एव षड्जाद्याः पञ्चमादिर्न गृह्यते ॥
पक्कसारणिमार्गे तु तया तन्त्र्या ऽऽद्यया पुनः ।
विकल्पेन ग्रहीतव्यः पञ्चमः शुद्धधैवतः ॥
अथ द्वितीयया मन्द्रपञ्चमस्वरयुक्तया ।
ग्राह्याः पधनिनामानः स्वरा न सरिगादयः ॥
पक्कसारणिमार्गे तु तया तन्त्र्या द्वितीयया ।
उपादेया विकल्पेन मध्यस्थानसमुद्भवाः ॥
षड्जः शुद्धर्षभश्चैव शुद्धगांधार इत्यपि ।
तन्त्र्या तृतीयया चाथ मध्यषड्जेन युक्तया ॥
मध्यस्थानस्वराणां तु गणने सरिगाभिधाः ।
त्रय एव स्वरा ग्राह्या न पुनर्मध्यमादयः ॥
पक्कसारणिमार्गे तु तया तन्त्र्या तृतीयया ।
शुद्धमध्यमसंज्ञश्च वराळीमध्यमस्तथा ॥
पञ्चमश्चेति संग्राह्या विकल्पेन यत्रः स्वराः ।
मध्यस्थानसमुद्भूता इत्यस्माभिर्विनिश्चितम् ॥
शुद्धमेळाख्यवीणायां पक्कसारणिवर्त्मनि ।
निर्वाहकाश्चतुर्दण्ड्याः स्वराः पञ्चदशैव तु ॥
अनुमन्द्रस्थयोर्धन्योः स्थाने स्यान्मध्यषड्जकः ।
इत्येवं शुद्धमेळायां पक्कसारणिनादने ॥

ये गृह्यन्ते विकल्पेन स्वरास्ते संप्रदर्शिताः ।
अथातो मध्यमेलाख्यवीणायामभिदध्महे ॥
वादने पक्कसारण्या ये स्वरास्तान्विकल्पितान् ।
मन्द्रस्थानजुषां सप्तस्वराणां गणनाविधौ ॥
आद्यतन्त्रिकया ग्राह्याः स्वराः सरिगमाभिधाः ।
चत्वार एव न पुनः पञ्चमाद्यास्तदुद्भवाः ॥
पक्कसारणिमार्गे तु ते गृह्यन्ते विकल्पिताः ।
मन्द्रपञ्चमशोभिन्या तन्त्र्या चाथ द्वितीयया ॥
पधनीति स्वरा ग्राह्यास्त्रयो न सरिगादयः ।
पक्कसारणिमार्गे तु ते गृह्यन्ते विकल्पिताः ॥
ततश्च मध्यमेलायां पक्कसारणिवर्त्मनि ।
ग्राह्या मन्द्रस्वराः सप्त सप्त मध्यस्वरास्तथा ॥
तारषड्जो ऽनुमन्द्रस्थौ धनी सप्तदश स्वराः ।
गृह्यन्ते पक्कसारण्यां गाने दण्ड्यामिव स्फुटम् ॥
कर्णाटान्ध्रतुरुष्कादिपदगानेषु संग्रहम् ।
तारस्थानरिगादीनां कुर्वते खलु गायकाः ॥
गाने च वादने चैव स्वराणामेकविंशतेः ।
विनियोगप्रकारस्तु विविच्य परिदर्शितः ॥
लक्षितव्या मध्यमेलवीणा लक्ष्मानुसारतः ।
वीणेयमेव लोके तु जन्त्रमित्यभिधीयते ॥
उक्तैकतन्त्रिका वीणा नकुला तु त्रितन्त्रिका ।
त्रितन्त्रिकेयमन्वर्था लोके जन्त्रमितीरिता ॥
तन्त्रीभिः सप्तभिश्चित्रा विपञ्ची नवभिः स्मृता ।
तन्त्रीणामेकविंशत्या कीर्तिता मत्तकोकिला ॥
मत्तकोकिलवीणैव स्वरमण्डलमुच्यते ।
मुख्येयं सर्ववीणानां त्रिस्थानैः सप्तभिः स्वरैः ॥
संपन्नत्वात्तदन्यास्तु तस्याः प्रत्यङ्गमीरिताः ।
करणैश्चित्रयन्त्यस्तास्तस्याः स्युरुपरञ्जिकाः ॥

मुख्या ऽत्र प्रकृतिः प्रोक्ता प्रत्यङ्गं विकृता स्मृता ।

अत्रायमर्थः—

रूपं कृतं प्रतिकृतं प्रतिभेदस्ततः परम् ।
स्याद्रूपशेषमोघश्च प्रतिशुष्केति षड्विधम्
करणं तैश्चित्रयन्त्यस्तस्याः स्युरुपराञ्जिकाः ।
पुष्णन्ति वीणावाद्यं ये रक्तिं दधति चातुलाम् ॥
कुर्वन्त्यदृष्टपुष्टिं च ते धातव इति स्मृताः ।
ये प्रहारविशेषोत्थाः स्वरास्ते धातवो मताः ॥
विस्तारकरणाविद्धव्यञ्जनाश्चेति धातवः ।
यथास्थानं प्रयोक्तव्यास्ते च वृत्तिसमाश्रयाः ॥
करणं चित्रितं चैतैर्धातुभिश्च विवर्धितम् ।
वाद्यं गीतानुगं प्रोक्तं शुष्कं दशविधं पृथक् ॥
आश्रावणारम्भविधिर्वक्त्रपाणिस्ततः परम् ।
संघोटना चतुर्थी च पञ्चमी परिघट्टना ॥
मार्गासारितकं लीलाकृतमासारितं त्रयम् ।
दशेति शुष्कवाद्यानि कथितानि मुनीश्वरैः ॥
प्रत्येकं तस्य चावृत्तिर्वर्णालंकारशोभिना ।
वृत्तित्रयेण वाद्यैश्च तताद्यैः करणेन च ॥
धातुना चित्रिता कार्या बुधैर्वीणाविधाविह ।
रुद्रवीणाऽऽदिवीणानां वक्ष्यन्ते भरतादयः ॥
कृत्वा श्रुत्वा वाद्यकाले चाङ्गुलैर्दण्डघट्टनम् ।
ब्रह्मघ्नश्च शुभघ्नश्चेत्यभाषत धनंजयः ॥

॥ इति नकुलादिपञ्चवीणालक्षणम् ॥

आलापिनीति योक्ता ऽत्र लोके दण्डेति सोच्यते ।
नवमुष्टिमितो दैर्घ्ये वैणवः सुषिरान्तरः ॥
अङ्गुलद्वंद्वपरिधिः प्राग्वद् ग्रन्थ्यादिवर्जितः ।
श्लक्ष्णः समः सुवृत्तश्च दण्डः स्यात्ककुभं दधत् ॥
तस्य तुम्बं परीणाहे द्वादशाङ्गुलसंमितम् ।
चतुरङ्गुलवक्त्रं च दन्तनाभिसमन्वितम् ॥

अग्राद्धस्तात्पादोने मुष्टियुग्मे निबध्यते ।
अत्र मेषान्त्रतन्त्री स्यात्सूक्ष्मा श्लक्ष्णा समा दृढा ॥
खर्परं नारिकेलोत्थं दोरको दोरिका तथा ।
त्रीण्येतानि न विद्यन्ते यत्र सा ऽऽलापिनी मता ॥
पट्टसूत्रमयी तन्त्री यद्वा कार्पाससूत्रजा ।
रक्तचन्दनजान्सर्ववीणादण्डान्परे जगुः ॥
दशमुष्ट्यधिकं मानं कचिल्लक्ष्येषु दृश्यते ।
तुम्बं वक्षसि निक्षिप्य वामाङ्गुष्ठेन तस्य च ॥
मूलमुत्पीड्य धृत्वा तामथ मध्यमया सुधीः ।
दक्षिणानामया चैनां वादयेद्बिन्दुघातवत् ॥

॥ इत्यालापिनीलक्षणम् ॥

किंनरी द्विविधा लघ्वी बृहती चेति कीर्तिता ।
गृध्रवक्षोऽस्थिनलिकाः कनिष्ठाङ्गुलिसंमिताः ॥
लौही कांस्यमयी यद्वा कीर्तिता सारिकाऽऽख्यया ।
श्लिष्टा वस्त्रमषीमिश्रमदनेन चतुर्दश ॥
चतुर्दशस्वरस्थाने दण्डपृष्ठे निवेशयेत् ।
सप्तकस्य द्वितीयस्य यो निषादो भवेदधः ॥
तस्य स्थाने भवेदाद्या सारिका ऽन्योर्ध्वमङ्गुलात् ।
स्थापयेदन्तरे किंचित्किंचित्पूर्वाधिके परा ॥
त्र्यङ्गुलावध्यष्टमीं तु पूर्वस्यास्त्र्यङ्गुलान्तरे ।
स्थापयित्वा पराः षट् च पूर्वपूर्वाधिकान्तरे ।
चतुरङ्गुलपर्यन्तं सारिकाः संनिवेशयेत् ॥
अस्यां स्थायिनमारभ्य गणयेत्सप्तकद्वयम् ।
सारीककुभयोर्मध्ये तर्जन्या त्र्यङ्गुलित्रभात् ॥
वादयेत्किंनरीवीणातन्त्रीं दक्षिणपाणिना ।
वामस्य तिसृभिस्ताभिरङ्गुलीभिस्तु तन्त्रिकाम् ॥
तत्तत्सारीप्रदेशस्थां स्वरव्यक्त्यै निपीडयेत् ।
वितस्त्यभ्यधिका दैर्घ्ये परिणाहे ऽङ्गुलाधिका ॥
लघ्व्या स्याद् बृहती स्नायुमयी तन्त्रीस्त्रितुम्बिका ।
आलापिनीवदस्यां च स्थाप्यं तुम्बं तृतीयकम् ॥

अन्यल्लघ्वीगतं लक्ष्म बृहतीं किंनरीं श्रयेत् ॥

॥ इति द्विविधकिंनरीलक्षणम् ॥

किंनरीत्रितयं तत्र देशीसंसिद्धमन्यथा ।
बृहती मध्यमा लघ्वीत्यथासां लक्ष्म वक्ष्यते ॥
पृथग्यवोदरैः षड्भिर्निस्तुषैः स्यादिहाङ्गुलम् ।
बृहत्यां देशिसंसिद्धकिंनर्यामपि तद् ब्रुवे ॥
सारीणामन्तरालानां च पृथक्स्वरकारणम् ।
यन्मेढकशिरोमध्यादुपक्रम्यान्तरं भवेत् ॥
सारीमस्तकमध्यानां तदिदानीं निरूप्यते ।
आद्यान्तरं तत्र यवाधिकं पञ्चाङ्गुलं मतम् ॥
द्वितीयमन्तरालं तु चतुरङ्गुलमुत्तरम् ।
तस्मात्तृतीयतुर्ये तु यवन्यूने मते सताम् ॥
यवाधिकत्र्यङ्गुलं तु ज्ञेयं पञ्चममन्तरम् ।
यवोनत्र्यङ्गुलं षष्ठं सयवत्र्यङ्गुलं पुनः ॥
अन्तरालं सप्तमं स्यात्सार्धत्र्यङ्गुलमष्टमम् ।
नवमं तु यवार्धेन सार्धाङ्गुलमितं मतम् ॥
दशमं त्र्यङ्गुलं हीनं यवेनैकादशं ततः ।
द्वादशं तु तृतीयांशन्यूनं तस्मात्त्रयोदशम् ॥
सतृतीयांशाङ्गुलं स्यादङ्गुलं तु चतुर्दशम् ।
स्वराः पदे स्युः सारीणां चतुर्दशभिरन्तरैः ॥
सप्तकद्वयमेवं स्यादेकतारस्वराधिकम् ।
यथास्वं स्वरदेशांशैः श्रुतीस्तस्या विचिन्वते ॥
द्वित्रास्ततोऽधिकाः सारीर्निबध्नीयात्परे त्विह ।

॥ इति बृहती किंनरी ॥

पिनाकी धनुराकारा वीणा तस्यास्तु वादनम् ।
अश्ववालादिकेशोत्थो गुणो वादनधन्वनः ॥
तुम्बं धृत्वाऽथ पादाभ्यां भुवि न्यस्तमधोमुखम् ।
तत्र लग्नशिखाऽथोर्ध्वा पिनाकी स्कन्धसंश्रिता ॥
आक्रम्य वामहस्तस्थतुम्बमूलेन तद्गुणम् ।
तज्ज्ञो दक्षिणहस्तस्थधनुषा वादयेज्ज्यया ॥

॥ इति पिनाकीलक्षणम् ॥

यथा यथा स्वरे व्यक्ती रक्तेः प्रचुरता भवेत् ।
तथा तथा विधातव्यं ततं लोकानुसारतः ॥
सम्यक्स्वरोपयोगीनि तन्त्रीवाद्यानि कानिचित् ।
उक्तान्यन्यान्यपि प्राज्ञस्तर्कयेदनया दिशा ॥
किंनर्यामात्मवीणायां गन्धर्वः सिन्धुसंज्ञकः ।
रुद्रवीणादियन्त्रस्य वक्ष्यते भरतादयः ॥
कृत्वा श्रुत्वा वाद्यकाले चाङ्गुलेर्दण्डघट्टनम् ।
स ब्रुह्मघ्नः शिशुघ्नश्चेत्यभाषत धनंजयः ॥
यो वीणावादनं वेत्ति तत्त्वतः श्रुतिजातिवित् ।
तालपातकलाऽभिज्ञः सो ऽक्लेशान्मोक्षमृच्छति ॥
तस्माद्वीणा निषेव्येति याज्ञवल्क्यादयो ऽब्रुवन् ।
नादश्रुतिस्वरग्रामजातिरागादितत्त्ववित् ॥
देहसौष्ठवसंपन्नः स्थिरासनपरिग्रहः ।
जितश्रमकरद्वंद्वस्त्यक्तभीतिर्जितेन्द्रियः ॥
प्रगल्भधीः सुशारीरो गीतवादनकोविदः ।
सावधानमनाश्चेति वैणिके वर्णिता गुणाः ॥

॥ इति ततवाद्यलक्षणम् ॥

वैणवः खादिरो दान्तश्चान्दनो राक्तचन्दनः ।
आयसः कांस्यजो रौप्यो वंशः स्यात्काञ्चनो ऽथ वा ॥
वर्तुलः सरलः श्लक्ष्णो ग्रन्थिभेदव्रणोज्झितः ।
कनिष्ठाङ्गुलिविस्तारं गर्भे च सुषिरं दधत् ॥
स्वदैर्घ्यमानदैर्घ्यं च समाकृतिसमन्ततः ।
तस्य द्वे त्रीणि चत्वारि चाङ्गुलानि शिरःस्थलात् ॥
त्यक्त्वा फूत्कारसुषिरं कार्यमङ्गुलसंमितम् ।
मुखरन्ध्रात्तारन्ध्रं भवेदेकाङ्गुलान्तरम् ।
अर्धाङ्गुलान्तराणि स्यू रन्ध्राण्यन्यानि सप्त च ॥
तान्यष्टौ बदरीबीजसंकाशानि प्रचक्षते ।
वंशो ऽधः सर्वरन्ध्रेभ्यः परिशेष्यो ऽङ्गुलद्वयम् ॥
तेषु स्वरविभागाय सप्त रन्ध्राणि मन्वते ।
नादहेतोर्मारुतस्य निर्गमायाष्टमं मतम् ॥

फूत्कारप्रभवो वायुः पूर्यते मुखरन्ध्रतः ।
वंशस्थैर्नवभी रन्ध्रैरेकवीरो निगद्यते ॥
वंशस्य मुखरन्ध्रस्यताररन्ध्रस्य चान्तरे ।
एकैकाङ्गुलवृद्ध्या स्युरन्ये वंशाश्चतुर्दश ॥
आ ऽष्टादशाङ्गुलाद्वंशादेतदङ्गुलवर्धनम् ।
उमापतिर्द्व्यङ्गुलः स्यात्त्रिभिस्त्रिपुरुषो ऽङ्गुलैः ॥
चतुर्मुखश्चतुर्भिः स्यात्पञ्चवक्त्रस्तु पञ्चभिः ।
षडङ्गुलः षण्मुखः स्यान्मुनिः सप्ताङ्गुलो मतः ॥
वसुरष्टाङ्गुलः प्रोक्तो नागेन्द्रस्तु नवाङ्गुलः ।
दशाङ्गुलो महानन्दो रुद्रस्त्वेकादशाङ्गुलः ॥
द्वादशाङ्गुल आदित्यो मनुर्वंशश्चतुर्दशः ।
कलानिधिः षोडशः स्याद्न्वर्थो ऽष्टादशाङ्गुलः ॥
अविस्पष्टान्तरत्वेन नेष्टः सप्तदशाङ्गुलः ।
त्रयोदशाङ्गुलस्तद्वत्च च पञ्चदशाङ्गुलः ॥
मुरल्याख्यो ऽपरैर्वंशो विंशत्यङ्गुलकः स्मृतः ।
द्वाविंशत्यङ्गुलो ऽप्यन्यो वंशस्तज्ज्ञेषु दृश्यते ॥
तं च श्रुतिनिधिं प्राहुर्वंशं वंशविदो जनाः ।
अत्र सप्तस्वरोत्पत्तिः श्रुतीनामुद्भवक्रमः ॥
उच्यते वंशशास्त्रोक्तरीत्या ऽनुस्वरमेलकः ।
विरलाश्चातितारत्वाद्वंशाः पञ्चाङ्गुलादधः ॥
अष्टादशाङ्गुले वंशे स्वररन्ध्रेषु सप्तसु ।
मुद्रितेषु भवेत्षड्जो मन्द्रसप्तकसंस्थितः ॥
षट्स्वेवमन्यवंशेषु स्युः क्रमादृषभादयः ।
आरभ्याष्टाङ्गुलादेवमधो वंशेषु सप्तसु ॥
मध्यस्थानगताः सप्तोद्यन्ति षड्जादयः क्रमात् ।
तारस्थानस्थितः षड्जस्त्वेकवीरस्य जायते ॥
सर्वेष्वेतेषु वंशेषु मुक्ते रन्ध्रद्वये ऽन्तिमे ।
स्वरो द्वितीयो जायेत तृतीयाद्यास्ततः क्रमात् ॥
सप्तमान्ताः प्रजायन्ते ह्यादिरन्ध्रविमोचनात् ।
मुक्ते तु ताररन्ध्रे ऽन्यरन्ध्रेषु पिहितेषु च ॥

अष्टमस्वरसंभूतिः पूर्वाचार्यैरुदीरिता ।
व्यक्तमुक्ताङ्गुलित्वेन समग्रो जायते स्वरः ।

॥ इति स्वरोत्पत्तिक्रमः ॥

अङ्गुल्याः कम्पने तत्र श्रुतिरेका ऽपचीयते ॥
श्रुतिद्वयं त्वर्धमुक्ते तत्कम्पे तु श्रुतित्रयम् ।
अन्यथा वर्णयन्तीह केचित् सप्तस्वरोदयम् ॥
अर्धेन्दुनागफणवद्वंशे स्थाप्यं करद्वयम् ।
वामस्यानामिकाऽङ्गुल्या षड्जो मध्यमया पुनः ॥
रिषभः स्यात् प्रदेशिन्या गांधार इति वामतः ।
त्रयः स्वराः प्रजायन्ते चत्वारो दक्षिणात्करात् ॥
कनिष्ठया मध्यमः स्यात् पञ्चमो ऽनामया स्वरः ।
धैवतः स्यान्मध्यमया प्रदेशिन्या निषादवान् ॥
स्थानत्रयस्य निष्पत्तिं ते चास्मिन्नन्यथा जगुः ।
सुशिक्षितेन रचितात्फूत्कारान्मध्यसप्तके ॥
जायन्ते वैणशारीरस्वरसंवादिनः स्वराः ।
तारस्था मुखसंयोगसंकटे मुखरन्ध्रके ॥
तं वादनप्रकारं च टीपामाचक्षते जनाः ।
तया यद्वाद्यते रन्ध्रे तत्स्वरो द्विगुणो भवेत् ॥
रन्ध्रस्य मुखसंयोगविप्रकर्षात्तु मन्द्रगाः ।
तीव्रातीव्रतया वायोः शीघ्रमन्थरभावतः ॥
पूरणापूरणाभ्यां चोपचयापचयाद् ध्वनेः ।
कुर्वन्त्येकत्र रन्ध्रे ऽपि तज्ज्ञा नानास्वरोदयम् ॥
कम्पिता वलिता मुक्ता ऽर्धमुक्ता च निपीडिता ।
इति वंशे गतिः प्रोक्ता शार्ङ्गदेवेन पञ्चधा ॥
अधरस्थस्य वंशस्य कम्पनात्कम्पिता मता ।
वर्णालंकारनिष्पत्तिः प्रयोगे ऽस्याः प्रयोजनम् ॥

॥ इति कम्पिता ॥

भवेत् संचारिनिष्पत्तौ वलिता ऽङ्गुलिचालनम् ।

॥ इति वलिता ॥

रन्ध्रे ऽखिले ऽङ्गुलीमुक्ते मुक्ता स्यान्मुक्तशब्दकृत् ॥
॥ इति मुक्ता ॥

अर्धमुक्ता ऽर्धमुक्ते स्याद् धृतशब्दविधायिनी ।
॥ इत्यर्धमुक्ता ॥

समन्तात्सर्वरन्ध्राणि पिधायाङ्गुलिभिर्यदा ॥
वंशं पूरयते तज्ज्ञस्तदा ज्ञेया निपीडिता ।
॥ इति निपीडिता ॥

अत्र कीर्तिधरस्त्वन्यां व्यवस्थामभ्युपागमत् ॥
षट्सप्ताङ्गुला वंशास्तारस्वरविधायकाः ।
मध्यस्वरा नवदशैकादशाङ्गुलकास्त्रयः ॥
अङ्गुलैर्यो द्वादशभिः स्यात्त्रयोदशभिश्च यः ।
हेतू मन्द्रस्वराणां तौ सर्ववंशमयः पुनः ॥
चतुर्दशाङ्गुलो वंशस्त्रिस्थानस्वरसाधकः ।
वर्णालंकारधात्वादिवाद्यसंवादनक्षमः ॥
एवं वंशा नवैवेति युक्तायुक्तविदो विदुः ।
धातुवृत्त्यादिकं यच्च वाद्यमाश्रावणादिकम् ॥
तत्संप्रदर्शयेद्वंशे वंशवाद्यविशेषवित् ।
वंशवीणाशरीराणि त्रयो ऽमी स्वरहेतवः ॥
ललितो मधुरः स्निग्धस्तेषु वंशः प्रशस्यते ।
वंशवीणाशरीराणामेकीभावेन यो ध्वनिः ॥
तत्र रक्तिविशेषस्य प्रमाणं विबुधा विदुः ।
अध्वन्यानां प्रवासेषु कामिनीनिर्जितेषु च ॥
शोकार्तेषु प्रयुञ्जीत मृदुमध्यलयध्वनिम् ।
वंशं युञ्जीत शृङ्गारे द्रुतादिललितध्वनिम् ॥
कम्पितस्फुरितध्वानं वंशं द्रुतलयाश्रयम् ।
क्रोधाभिमानयोः कुर्यान्मतङ्गेनेति कीर्तितम् ॥
स्निग्धता घनता रक्तिर्व्यक्तिः प्रचुरता ध्वनेः ।
लालित्यं कोमलत्वं च नादानुरणनं तथा ॥
त्रिस्थानत्वं श्रावकत्वं माधुर्यं सावधानता ।
द्वादशेति गुणाः प्रोक्ताः सुषिरे शाहसूनुना ॥

तत्र शब्दगुणेष्वेवैकादश प्रोक्तलक्षणाः ।
फूत्कृतेः सावधानत्वं न्यूनताऽऽधिक्यवर्जनम् ॥

॥ इति द्वादश फूत्कारगुणाः ॥

फूत्कारो यमलस्तोकः कृशः स्खलित इत्यमी ।
फूत्कारदोषा यमलं ब्रुवते प्रतिफूत्कृतिम् ॥
एवमन्वर्थनामत्वान्नोच्यते लक्षणं पृथक् ।
कफिलस्तुम्बकी काकी संदष्टश्चाव्यवस्थितः ॥
पञ्चेति फूत्कृतेर्दोषानपरानूचिरे परे ।
यः कफोपहताद्वक्त्राद्विस्वरः स्फुटितो भवेत् ॥
कफिलो ऽसौ तुमुध्वानप्रायः प्रोक्तस्तु तुम्बकी ।
तारन्यूनतया काकस्वरः काकीति कथ्यते ॥
अल्पः संदष्टवद्भाति यो ऽसौ संदष्ट उच्यते ।
ऊनो ऽधिको वा यो रूक्षः कथ्यते सो ऽव्यवस्थितः ॥
कण्ठस्य गुणदोषा ये पुरोक्तास्तेषु केचन ।
फूत्कारे ऽपि यथायोगं योजनीया मनीषिभिः ॥

॥ इति दश फूत्कारदोषाः ॥

अङ्गुलीसारणाभ्यासः सुस्थानत्वं सुरागता ।
सुरागव्यक्तिमाधुर्यान्विता वेगाद्गतागते ॥
गीतवादनदक्षत्वं गातॄणां स्थानदायिता ।
तद्दोषाच्छादनं मार्गदेशीरागेषु कौशलम् ॥
स्वस्थानवदपस्थाने रागोद्भूतिप्रगल्भता ।
वांशिकस्य गुणानेतान् वक्ति श्रीशिवकिंकरः ॥

॥ इति वांशिकगुणाः ॥

मिथ्याप्रयोगबाहुल्यमेतद्गुणविपर्ययः ।
इष्टस्थानानवाप्तिश्च शिरसः कम्पनं तथा ॥
वांशिकस्येति दोषाः स्युर्वर्जनीयाः प्रयत्नतः ।

॥ इति वांशिकदोषाः ॥

एकः स्याद्वांशिको मुख्यश्चत्वारो ऽस्यानुयायिनः ॥
वांशिकानामिति प्रायस्तज्ज्ञैर्वृन्दं निगद्यते ।

॥ इति वांशिकवृन्दम् ॥

केषांचिद्देशिरागाणां वादनं संप्रदर्श्यते ॥
अधुना मुग्धबोधार्थमुदाहरणमात्रतः ।
मध्यमं स्थायिनं कृत्वा तृतीये कम्पिते स्वरे ॥
विलम्बिते द्वितीये ऽथ स्थायिनि न्यस्यते यदा ।
स्वस्थानं प्रथमं प्रोक्तं मध्यमादेस्तदा बुधैः ॥
तृतीयकम्पनादूर्ध्वं चतुर्थं पञ्चमं ततः ।
तुर्यस्वरं द्वितीयं च कृत्वा न्यासो ग्रहे यदा ॥
तदा द्वितीयं स्वस्थानं भरतेन प्रकीर्तितम् ।
चतुर्थस्वरमाहत्य स्थायिनं तत्परं ततः ॥
समुच्चार्य स्वरं तुर्यं पञ्चमं तु विलम्ब्य च ।
षष्ठं च पञ्चमं कृत्वा द्वितीयं च ग्रहे यदा ॥
न्यासस्तदा तृतीयं स्यात् स्वस्थानमिति तद्विदः ।
ग्रहद्वितीयतुर्यांश्च पञ्चमं सप्तमं ततः ॥
कृत्वा ऽष्टमं विलम्ब्याथ द्वितीयं तत्परं ततः ।
द्वितीयं सप्तमं कृत्वा पञ्चमं च चतुर्थकम् ॥
द्वितीयं च ग्रहे न्यासः स्वस्थानं तुर्यमिष्यते ।
दृश्यते मध्यमादिस्तु ग्रहो वंशेषु मुद्रितः ॥

॥ इति मध्यमादिः ॥

इत्येवं मुग्धबोधार्थं कश्चिद्रागः प्रदर्शितः ।
अनेनैव प्रकारेण संपश्यत बुधाः परान् ॥

॥ इति वंशवाद्यप्रकरणम् ॥

पावो वेणुसमुत्पन्नः स्यान्नवाङ्गुलवेणुवत् ।
कृतावेष्टो वल्लपत्रैर्लोकरीत्यैष वाद्यते ॥

॥ इति पावलक्षणम् ॥

पाविका वैणवी कार्या द्वादशाङ्गुलदैर्घ्यभाक् ।
स्थौल्ये ऽङ्गुष्ठमिता गर्भे स्वदैर्घ्ये सुषिरं श्रिता ॥
कनिष्ठाग्रमितस्थौल्यमस्या लोकानुसारतः ।
फूत्काररन्ध्रमेकं स्यात्सप्त स्युः स्वरसिद्धये ॥
वादनं विविधं नागयक्षावेशविधायकम् ।

॥ इति पाविका ॥

हस्तद्वयाधिका माने मुखरन्ध्रसमन्विता ॥
चतुःस्वरच्छिद्रयुता मुरली चारुवादिनी ।

॥ इति मुरली ॥

शृङ्गजा दारवी वा स्यात्काहलाकृतिधारिणी ॥
अष्टाविंशत्यङ्गुला च दैर्घ्ये मधुकरी शुभा ।
मुखरन्ध्रं च तस्याः स्यात्तुवरीबीजसंनिभम् ॥
मुखरन्ध्रादङ्गुलानि त्यक्त्वा चत्वारि वंशवत् ।
विधाय सप्त रन्ध्राणि कुर्वीत विवरान्तरम् ॥
तेषां च मुखरन्ध्रस्य मध्ये ऽधोभागसंस्थितम् ।
मधुरध्वनिसिद्ध्यै तन्मुखरन्ध्रेषु ताम्रजा ॥
निधातव्या यवस्थूला नालिका चतुरङ्गुला ।
तदूर्ध्वं चाक्रिका स्थाप्या दन्तजा शुक्तिजा ऽथ वा ॥
रन्ध्रमध्ये काशमयीं यद्वा देवनलोद्भवाम् ।
शुक्तिकां किंचिदुन्भिन्नमालतीकलिकाऽऽकृतिम् ॥
मृदुलां क्षीरपाकेण क्षिप्त्वा मधुकरीं ततः ।
वंशवद्वादयेद्रन्ध्रं पिदधीताप्यधस्तनम् ॥
वामाङ्गुष्ठाग्रभागेणेत्युक्तं भोसलमौलिना ।

॥ इति मधुकरी ॥

ताम्रजा राजती यद्वा काञ्चनी सुषिरान्तरा ॥
धत्तूरकुसुमाकारवदनेन विराजिता ।
हस्तत्रयमिता दैर्घ्ये काहला वाद्यते जनैः ॥
हाहूवर्णवती वीरबिरुदोच्चारकारिका ।

॥ इति काहला ॥

हस्तद्वयकृता या सा सैव तुण्डकिनी मता ॥
तुरुतुर्येपि सा लोके तित्तिरी च निगद्यते ।
यमलं तुण्डकिन्योश्च वाद्यं वाद्यविदो विदुः ॥

॥ इति तुण्डकिनी ॥

तुण्डकिन्येव चुक्का स्याद्दैर्घ्ये हस्तचतुष्टया ।

॥ इति चुक्का ॥

करेणुवदनाकारवदनं दोषवर्जितम् ॥
शृङ्गं यन्माहिषं श्लक्ष्णं स्निग्धं सुघटितं कृतम् ।
शृङ्गस्यानडुहस्याथ धत्तूरकुसुमाकृति ॥
खण्डमष्टाङ्गुलं न्यस्य मूले ऽस्य ध्वनिवृद्धये ।
अग्रं द्वित्र्यङ्गुलं तस्य च्छित्त्वा फूत्काररन्ध्रकम् ॥
विधाय तुथुकारेण वादयेद्विविधध्वनिम् ।
एतद्वै ध्वानगम्भीरं वाद्यं गोपालकेलिषु ॥

॥ इति शृङ्गम् ॥

निर्दोषस्योत्खातनाभेः शङ्खस्यैकादशाङ्गुलम् ।
शिखरं निर्मितं धातुसिक्थकाभ्यां मनोहरम् ॥
मूलतश्चाग्रपर्यन्तं ह्रस्वमानाकृति क्रमात् ।
रन्ध्रमर्धाङ्गुलमितं शिखरस्य मुखे भवेत् ॥
अन्तस्तु माषमात्रं स्याच्छङ्खमेवंविधं सुधीः ।
धृत्वा कर्कटहस्तेन भूरिश्वासभृतोदरम् ॥
हुंभुंथोधिगिदित्येतद्वर्णोद्घोषेन वादयेत् ।

॥ इति शङ्खः ॥

॥ इति सुषिरवाद्यम् ॥

मार्गो देशीति पटहो द्विविधः परिकीर्तितः ॥
आद्यस्य लक्षणं तावदुच्यते मानपूर्वकम् ।
सार्धहस्तद्वयं तस्य दैर्घ्यं स्यात्परिधिः पुनः ॥
षष्ट्यङ्गुलो मध्यदेशः पृथुलो दक्षिणं मुखम् ।
कर्तव्यं संमितं सार्धैरेकादशभिरङ्गुलैः ॥
वामं तु दशभिः सार्धैः संमितं दक्षिणे मुखे ।
आयसं वलयं कार्यं वामे वल्लीसमुद्भवम् ॥
षाण्मासिको मृतो वत्सो यस्तस्यादाय पारिकाम् ॥
तया विगुण्ठ्य वलयं वल्लीजं वामवक्त्रगम् ।
सप्तरन्ध्रान्वितं कृत्वा सुदृढैः सूक्ष्मदोरकैः ॥
निक्षिप्तैस्तेषु रन्ध्रेषु बध्नीयात्कलशाश्लथम् ।
ते हेमादिमयाः सप्त दैर्घ्येण चतुरङ्गुलाः ॥

त्यक्त्वा ऽङ्गुलानि चत्वारि वामे ऽस्या लोहपत्रिकाम्
अङ्गुलत्रयविस्तारां पटहे वेष्टयेद् दृढम् ॥
वाद्यकायस्य यच्चर्म पशोस्तेन घनेन च ।
कम्बलाख्येन बध्नीयात्पिहितं वदनद्वयम् ॥
दक्षिणास्यस्य कवलं परितः कृतरन्ध्रकम् ।
रन्ध्रक्षिप्तैर्गुणैर्गाढमाकृष्येतरवक्त्रगैः ॥
वलये तान् गुणान् सम्यग्बध्नीयाद्दार्ढ्यसिद्धये ।
वामस्य कवलान्तःस्थसप्तरन्ध्रनिवेशितैः ॥
गुणैरावेष्ट्य कलशानायसैर्वलयैर्दृढैः ।
अन्तः क्षिप्त्वा समाकृष्टैर्वलये गाढतां नयेत् ॥
कलशेभ्यो बहिर्वामवलयान्ते च बध्यते ।
वेष्टनाय कटेः कच्छेत्युक्तो ऽयं स्कन्ददैवतः ॥
श्रीभोसलकुलाग्र्येण पटहो मार्गसंभवः ।
देशीस्थो ऽप्येवमेव स्याद्दैर्घ्ये ऽसौ सार्धहस्तकः ॥
सप्ताङ्गुलं दक्षिणास्यमन्यत्सार्धषडङ्गुलम् ।
आन्तरं जाठरं चर्म पशोर्गादितमुद्दली ॥
तया तु स्वेच्छया वक्त्रं वाममस्य निबध्यते ।
विशेषो ऽयं भवेदस्मिन्नुभौ खादिरदारुजौ ॥
त्रिधोक्तो ऽयं द्वयोरन्यैरुत्तमो मध्यमो ऽधमः ।
उत्तमः प्रोक्तमानः स्याद् द्वादशांशोनितः पुनः ॥
मध्यमः षष्ठभागेन विहीनस्त्वधमो भवेत् ।
ङवर्जितः कवर्गश्च टतवर्गौ रहावपि ॥
इति षोडश वर्णाः स्युरुभयोः पाटसंज्ञकाः ।
संयोगविप्रयोगाभ्यां क्रमव्युत्क्रमयोगतः ॥
सस्वरत्वास्वरत्वाभ्यां पाटास्ते स्युरनेकधा ।
उद्दल्यामेव झेंकारो देंकारः कवले ऽधिकः ॥
देशीपटहमेवाहुरिममङ्कावजं जनाः ।
अष्टादशाङ्गुलः किंचिन्नताग्रो मध्यतः पृथुः ॥
कोणः कार्यो मूलदेशे मदनाम्बरवेष्टितः ।
पद्मासनोपविष्टेन गोष्ठ्यामूरुद्वयोपरि ॥

संस्थाप्य मार्गपटहो वाद्यो वर्णोद्भवे पटुः ।
नाटके त्वर्धवक्त्रो ऽयं वाद्यते घटवाद्यवत् ॥
कोणेन पाणिना वा ऽस्य वादनं सूरयो विदुः ।

॥ इति पटहलक्षणम् ॥

यथा निर्वर्त्यते गीतं गायकैः सप्तभिः स्वरैः ।
निर्वर्त्यते वाद्यनृत्ये पाटैस्तावत्तथा बुधैः ॥
पाटाक्षरैरेव सम्यग्यतस्तालो ऽपि मीयते ।
अतः पाटा निरूप्यन्ते शास्त्रमार्गानुसारतः ॥
ये पाटाः पटहे प्रोक्तास्तेषां विविधगुम्भनात् ।
हस्तोद्भवाः पाटभेदा हस्तपाटाः प्रकीर्तिताः ॥
ते चानन्ता न शक्यन्ते प्रत्येकं वेदितुं जनैः ।
सद्योजातादिपञ्चभ्यो मुखेभ्यः पार्वतीपतेः ॥
नागबन्धादयो जातास्तस्मान्मुख्यतमा हि ते ।
सद्योजातान्नागबन्धः स्वस्तिको वामदेवतः ॥
अलग्नो ऽभूदघोरात्तु शुद्धिस्तत्पुरुषाभिधात् ।
ईशानाख्यमुखाज्जातः समस्खलितसंज्ञकः ॥
नागबन्धश्च पवनस्तथैकैकसराभिधौ ।
ततो दुःसरसंचारविक्षेपा नागबन्धजाः ॥
सप्तेत्यथ स्वस्तिकजाः स्वस्तिको बलिकोहलः ।
फुल्लपूर्वश्च विक्षेपः कुण्डलीपूर्वकश्च सः ॥
संचारविग्वली खण्डनागबन्धश्च पूरकः ।
भेदाः सप्तेत्यलग्नस्य त्वेते सप्त प्रकीर्तिताः ॥
अलग्नोत्सारविश्रामा विषमाद्या ग्वली सरी ।
स्फुरी स्फुरणकश्चेति शुद्धे स्याच्छुद्धिरादिमः ॥
स्फुरस्फुरणकोच्छलवलतावघटास्ततः ।
तकारो माणिक्यवल्ली भेदाः सप्तेति संमताः ॥
समस्खलितकस्याद्यः समस्खलितसंज्ञकः ।
विकटः सदृशः पाटखली चाडुखली ततः ॥
पाटोत्फुल्लस्तथा खुत्ता भेदाः सप्तेति सन्त्यमी ।
पञ्चत्रिंशद्धस्तपाटास्तलपाटाश्च कीर्तिताः ॥

कोणाहतश्च संभ्रान्तो विषमार्धसमाविति ।
चत्वारो हस्तपाटाः स्युर्नन्दिकेश्वरभाषिताः ॥
उत्फुल्लः खलकस्तद्वत्पाण्यन्तरनिकुट्टकः ।
दण्डहस्तः पिण्डहस्तो युग्महस्तोर्ध्वहस्तकौ ॥
स्थूलहस्तो ऽर्धार्धपाणिः पार्श्वपाण्यर्धपाण्यपि ।
कर्तरीसमकर्तर्यौ ततो विषमकर्तरी ॥
समपाणिश्च विषमपाणिः स्यात्पाणिहस्तकः ।
नागबन्धो ऽप्यवघटः स्वस्तिकश्च समग्रहः ॥
इत्येकविंशतिर्हस्तपाटाः स्युः पटहादिषु ।
उल्लोलः पाण्यन्तरश्च निर्घोषः खण्डकर्तरी ॥
दण्डहस्तः समनखो बिन्दुर्यमलहस्तकः ।
रेचितो भ्रमरो विद्युद्विलासो ऽप्यर्धकर्तरी ॥
अलग्नाख्यस्ततो रेफः समपाणिरतः परम् ।
परिवृत्तः षोडशेति वाद्येषु पटहादिषु ॥
एतान् प्रायो हुडुक्कायां कुर्वते वाद्यवेदिनः ।
अष्टौ विषमपाटाः स्युरपाटाख्यान् ब्रुवे ऽधुना ॥
तलप्रहारः प्रहरो वलितो गुरुगुञ्जितः ।
अर्धसञ्चित्रिसञ्चश्च विषमो ऽभ्यस्त इत्यमी ॥
स्यातामलग्नपाटौ द्वौ सञ्चविच्छुरिताभिधौ ।
भ्रमरः कुञ्चितश्चेति चित्रपाटावुभौ मतौ ॥
अष्टाशीतिरिमे हस्तपाटाः शास्त्रेषु कीर्तिताः ।
शिववक्त्रोत्थपाटानां स्वरूपं प्रतिपादये ॥
तेषामुत्पादकान् पाणींल्लोकतो लक्षयेत्सुधीः ।

टनगिनगिननगि इति नागबन्धः । ननगिडगिडदगि इति पणवः । गिडगिडगिडदत्था इत्येकः । किटततकिटतत इत्येकसरः । नखुनखु इत्यङ्कुसरः । खिरतकिट इति संचारः । थोंगिथोंथि इति विक्षेपः । इति सद्योजातोद्भवाः सप्त हस्तपाटाः ॥

ततकिटकि इति स्वस्तिकः । थोहंता इति वलिकोहलः । थोंगिन थोंगिन इति फुल्लविक्षेपः । थोंथोंगोंगों इति कुण्डलीविक्षेपः । थोंगिणतत्ता

इति संचारविस्खली । किटथों थोंगिनखेंखें इति खण्डनागबन्धः । तकुझेंझें इति पूरकः । इति वामदेवोद्भवाः सप्त हस्तपाटाः ॥

नगगिडगिडदगिदा इत्यलग्नः । दत्थरिकिदत्थरिकि इत्युत्सारः । तकिधिकितकिधि इति विश्रमः । टकुनगुटकुनगु इति विषमखली विषमस्खलितो वा । खिरितुखिरितु इति सरी । खिरिखिरि इति स्फुरतः । नरकित्थरिकि इति स्फुरणः । इत्यघोरोद्भवाः सप्त हस्तपाटाः ॥

दगिगिडगिडदगिदा इति शुद्धिः । टटकुटट इति स्वरस्फुरणः । ननागनखरिखरि इत्युत्फुल्लः । दखेंदखेंदखेंखे इति वलितः । थोंगिनगिथोंगिनगि इत्यवघटः । तत्ता इति तकारः धिधि इति माणिक्यवल्ली । इति तत्पुरुषोद्भवाः सप्त हस्तपाटाः ॥

तझें तझें झें इति समस्खलितः । गिरिग्ड गिरिग्ड इति विकटः । कणकणकि इति सदृशः । धिधिकिटकि इति बली । दिगिनगिदिगिनगि इति अड्डुखली अड्डुस्खलितो वा । धरकटधरकट इत्यनुच्छलः । दोंनकटदोंनकट इति खुत्तः । इतीशानोद्भवाः सप्त हस्तपाटाः ॥

॥ इति सदाशिवपञ्चवक्त्रोद्भवाः
पञ्चत्रिंशत्पाटाः ॥

एवंजातीयका एवान्ये पाटा इत्यतो मया ।
नोदाहृता मर्दलादिवाद्यभेदान् ब्रुवे ऽधुना ॥
पाटभेदाश्च वाद्यानि प्रबन्धा वाद्यसंश्रयाः ।
यथायोगं मर्दलादिसर्ववाद्येष्विमे मताः ॥
अधुना मर्दलस्यादौ लक्षणं संप्रचक्ष्महे ।
निर्दोषबीजवृक्षोत्थः पिण्डे ऽष्टाङ्गुलसंमितः ॥
एकविंशत्यङ्गुलः स्याद्दैर्घ्ये वामे मुखे पुनः ।
चतुर्दशाङ्गुलानि स्युर्दक्षिणे तु त्रयोदश ॥
मानं यस्य मनाङ्मध्यः पृथुरेकाङ्गुलाधिके ।
वक्त्राभ्यां चर्मणी वृत्ते घने ये प्रान्तयोस्तयोः ॥
चत्वारिंशत्पृथग्ग्रन्थ्राण्यङ्गुलान्तरवन्ति च ।
वध्रे तद्ग्रन्ध्रविन्यस्ते सीवनप्रक्रियावति ॥
प्रोतोर्ध्वाधः स्थिता दृष्टोदरपृष्ठा च विध्रिका ।
क्रियते वेष्ट्यते मध्ये त्रिभिर्बन्धैर्दृढं यथा ॥

कार्यो गोमूत्रिकाबन्धस्तत्र वध्रद्वयेन च ।
तथा यथा पिनद्धास्ये भवेतां चर्मणी दृढे ॥
कुण्डल्योः प्रान्तयोर्वामकुण्डल्यां संनिवेश्य च ।
कच्छां क्षिप्त्वा दक्षिणस्यां कृष्ट्वा द्विगुणतां नयेत् ॥
साञ्चलद्वितयां पट्टमयीमष्टाङ्गुलायताम् ।
यद्वा ऽन्यवस्त्रजां शोभानुगां न्यस्येत्कटीतटे ॥
निगदन्ति मृदङ्गं तं मर्दलं मुरजं तथा ।
प्रोक्तं मृदङ्गशब्देन मुनिना पुष्करत्रयम् ॥
अत्यन्ताभ्यवहार्यत्वान्निःशङ्को न तनोति तत् ।
भूतिमिश्रेण भक्तेन चिक्कणेनातिमर्दनात् ॥
पिण्डिकां पूरिकाकारां वामवक्त्रे निवेशयेत् ।
बोहणाख्येन तेनास्यं लिम्पेदल्पेन दक्षिणम् ॥
एवं जलधरध्वानगम्भीरो भवति ध्वनिः ।
भरतेनात्र च प्रोक्ता देवता नन्दिकेश्वरः ॥
रक्तचन्दनजो यद्वा खादिरो ऽन्यैरयं मतः ॥
त्रिंशदङ्गुलदैर्घ्यश्च पिण्डे त्वङ्गुलसंमितः ।
एतस्य वामं वदनं द्वादशाङ्गुलसंयुतम् ॥
दक्षिणं तु मितं सार्धैरेकादशभिरङ्गुलैः ।
पाटाश्च तद्भितो टेंहेंणंदेमित्यत्र कीर्तिताः ॥
तटल्हादधलाश्चेति पाटानन्यत्र मन्वते ।
इह स्युः पटहोक्ताश्च वर्णाः षोडश कादयः ।
अधिकान् भज्ञमान् वर्णान् वर्णयन्त्यपरे त्विह ।
तेषु तद्धयादयः सप्त केवलाः शुद्धसंज्ञकाः ॥
सस्वरैरस्वरैर्युक्तैरयुक्तैर्वा कखादिभिः ।
व्यापकाख्यैः षोडशभिर्मिश्रास्ते कूटसंज्ञकाः ॥
कूटमिश्रास्तु ते शुद्धा बुधैः खण्डाभिधा मताः ।
छन्दसा भूरिहृद्येन स्फूर्तिमूर्तिरुदारधीः ॥
कविः कवयति श्लोकं श्रवणोत्सवदैः पदैः ।
यथा यथा कवित्ताले वर्णांल्लयमनोहरान् ॥

विधाय वादको वाद्यप्रबन्धान् बन्द्धुमर्हति ।
इमं कवितकाराख्यं वादकं ब्रुवते जनाः ॥

॥ इति मर्दललक्षणम् ॥

चतुर्विधो मार्दलिको वादको मुखरी तथा ।
ततः प्रतिमुखर्याख्यस्तुर्यो गीतानुगो मतः ॥
वादको वादकर्ता स्याद्वादः पक्षपरिग्रहः ।
स्वपक्षसाधनं तद्वत्परपक्षस्य दूषणम् ॥
ये ऽन्ये जल्पवितण्डाऽऽद्या वादभेदाः सलक्षणाः
न तान् ब्रवीम्यहं ग्रन्थप्रपञ्चभयभङ्गुरः ॥
वादे च वादनं कार्यं प्रथमं ताडनाभिधम् ।
मर्दले तालरहिते वोहणेन विना ध्वनिः ॥
यो देहडडगित्यादिकृतो ऽसौ ताडनं मतम् ।
वोडवाडं घनरवं हस्तावत्यर्थमाचरेत् ॥
मुक्तशब्दात्मकं रेहद्डाद्प्रमुखं ततः ।
उघारं स्थापनं पश्चाद्वादयेत्तदथोच्यते ॥
मुखयोर्वोहनं दत्त्वा वादयेद्वाममाननम् ।
गद्दद्धामिति वक्त्रं तु गड्दद्धामिति दक्षिणम् ॥
ततो मध्यलये ताले द्वितीये मुखयोर्द्वयोः ।
कुर्यान्नादसमायोगमथोच्चं दलत्रयम् ॥
पृथग्विलम्बिते मध्ये द्रुते चैव लये क्रमात् ।
तथैकद्वित्रिथोंकाररचितं ग्रहमोक्षभाक् ॥
आलप्तिवच्च त्रिस्थानशुद्धं हस्तद्वयेन यत् ।
मधुरं वाद्यते तज्ज्ञैः स्थापनं तदुदाहृतम् ॥
ततस्थोंकारबहुलग्रहमोक्षो ऽन्तरो भवेत् ।
चतुरश्रत्र्यश्रमिश्रखण्डेष्वेकेन केनचित् ॥
तालेन टाकिनीवादौ कर्तव्यौ तदनन्तरम् ।
तयोरेकसरो जोडा चेति भेदद्वयं मतम् ॥
कृत्वा श्रमस्य वहनीं यस्ताले ऽष्टकलाऽऽदिके ।
वाद्यखण्डस्तालकलाप्रस्तारानुगतः कृतः ॥

अखण्डितष्टाकिनी सैकसरत्वं मकृत्कृते: ।
एकद्वित्रिचतुर्वारं शुद्धाभ्यसनतो भवेत् ॥
इह श्रमवहन्याख्य: प्रकारो वादने यथा ।

तद्धिन्गें टं ततधिधिथोंथोंठेंठें इति श्रमवहृणीं कृत्वा, एकसरटाकिनी यथा—तकधिकट तकधिकट धिकटतक तकधिकट तकतकधि धिकततक धिकटधिक ततधिकट इत्यष्टौ वाद्यखण्डस्य खण्डा अष्टासु कलासु सैव द्विवारं जोडा ॥

टाकिनीवत्समस्तं प्राक्खण्डं कृत्वा तत: परम् ।
खण्डं खण्डं द्विर्द्विवारं वाद्यते वाद्यसंज्ञके ॥
तत्रैकसरजोडात्वं टाकिनीवदुदाहृतम् ।

यथा—दंदंटिरिटिट्टिकद्द कडद्गझे कडद्गझे थरिकथरि टगणगणधरि गणगगधरि दथरिगडद्ग दथरिगडद्ग दथरिगडद्ग दथरि दथरि तगेड्द्कथरिकटतत्तक इति षोडशकले ताले षोडशकलासु षोडशखण्डकं वाद्यं कृत्वा तान् षोडश खण्डान् द्विर्द्विः कुर्यात् ।

तकारेण च सर्वेषामेतेषां त्याग इष्यते ।
कुर्यात्ततो दिगिदिगि दिंतां वादादिकं तथा ॥
वर्णा दिगिदिगीत्येते प्रोक्ता दिगिदिगिर्बुधै: ।
य: खण्डोऽतिद्रुते माने ताटवाद: स कथ्यते ॥
अन्येऽपि वाद्यविधयोऽप्यूह्यन्तामध्वनाऽमुना ।
इति वादप्रकाराणां सम्यक्त्वे विजयो भवेत् ॥

॥ इति वादक: ॥

कर्ता वाद्यप्रबन्धानां नृत्तशिक्षाविचक्षण: ।
गीतवादननिष्णात: सुरेखोऽन्तर्मुखश्च य: ॥
अर्धाङ्गमिव नर्तक्या वादयेद्रङ्गभूगत: ।
वादकै: प्रेक्षितमुखो वादनार्थं मुखर्यसौ ॥

॥ इति मुखरी ॥

किंचिद्धीनो मुखरिण: प्रोक्त: प्रतिमुखर्यसौ ।

॥ इति प्रतिमुखरी ॥

शुद्धसालगगीतानां वर्णान्कठिनकोमलान् ॥

समांश्च विषमाश्चादं मन्द्रं मध्यं च तारकम् ।
प्रौढं च मधुरं सम्यगनुगच्छति वादनात् ॥
पूर्वभागे तथा ऽऽभोगे जकाग्रहणे क्रमात् ।
कुर्याद्वैकल्पिके यद्वा समग्रं गीतमाश्रिते ॥
समुत्थिते वा ऽऽनुलोम्याद्वैलोम्याद्वोभयेन वा ।
निःसारौ सालगे गीते यस्तं गीतानुगं विदुः ॥
क्रमात्तकारथोंकारौ स कुर्याद् ग्रहमोक्षयोः ।

॥ इति गीतानुगः ॥

॥ इति चतुर्विधमार्दलिकलक्षणम् ।

वर्णव्यक्तिः सुरेखत्वमनुपायप्रवीणता ॥
मधुरोद्धतवाद्येषु विज्ञता हस्तलाघवम् ।
अवधानं श्रमजयो मुखवाद्येषु पाटवम् ॥
रक्तिरावर्जिकस्यानुवृत्तिर्बहुलता तथा ।
यतितालल्लयज्ञत्वं गीतानुगमनं तथा ॥
गुणा मार्दलिकस्यैते दोषः स्यात्तद्विपर्ययः ।

॥ इति मार्दलिकगुणदोषाः ॥

तद् वृन्दं द्वित्रिचतुरैस्तज्ज्ञैर्मर्दलधारिभिः ॥
प्राधान्येन विधातव्यं तैर्मुख्यर्यनुवर्तनम् ।

॥ इति मार्दङ्गिकवृन्दलक्षणम् ॥

या हस्तसंमिता दैर्घ्ये ऽष्टाविंशत्यङ्गुला पुनः ॥
परिधावङ्गुलमिता पिण्डे सप्ताङ्गुले मुखे ।
मण्डल्यौ वक्त्रयोर्वल्ली मध्यात्रेकादशाङ्गुले ॥
सपादाङ्गुलकस्थौल्य उद्दलीकृतबन्धने ।
वदनाभ्यां सह स्यातां कुर्याद्रन्धाणि षट् तयोः ॥
बन्धरज्जुनिवेशार्थं पुरोभागे ऽर्गलात्रयम् ।
कलशाकलितप्रान्तं पश्चाद्भागे ऽर्गलाद्वयम् ॥
बन्धसूत्रान्तरे मध्ये भवेदुदरपट्टिका ।
अङ्गुलत्रयविस्तारा श्लक्ष्णा हृदयहारिणी ॥
द्वात्रिंशत्तन्तुसंजातरज्ज्वा पक्षद्वयं दृढम् ।
बद्ध्वा तत्रोत्कक्षकौ च विधाय स्कन्धपट्टिकाम् ॥

तयोर्द्विगुणिकां न्यस्येदङ्गुलार्धार्धसंमितम् ।
छिद्रं यस्याश्चतुर्थांशे नादोद्बोधविधायकम् ॥
हुडुक्का सा बुधैः प्रोक्ता तस्याश्च स्कन्धपट्टिकाम् ।
न्यस्य स्कन्धे दक्षिणेन पाणिना वादनं भवेत् ॥
उदरे पट्टिका योक्ता तस्यां वामं निवेशयेत् ।
देवता मातरः सप्त शार्ङ्गदेवेन कीर्तिताः ॥
कुर्वीत पाटहान् वर्णानिह देंकारवर्जितान् ।
अत्रान्यैरधिकावुक्तौ मझेंकारौ मनीषिभिः ॥
लक्ष्यज्ञास्त्वावजं प्राहुरिमां स्कन्धावजं तथा ।

॥ इति हुडुक्कालक्षणम् ॥

॥ एवं करटादिवाद्यानि ॥

॥ अथ घनवाद्यम् ॥

कांस्यजं घनवाद्यं स्यात्कांस्यमग्नौ सुशोधितम् ।
कांस्यजो वर्तुलस्तालः सपादद्व्यङ्गुलाननः ॥
मध्ये ऽस्याङ्गुलविस्तारो निम्नो रन्ध्रं च निम्नगम्
पादोनगुञ्जामात्रं स्यात् पिण्डस्तु यवमात्रकः ॥
सार्धाङ्गुलः स्यादुत्सेधः समा श्लक्ष्णशुभाकृतिः ।
कार्यो तथा यथा नादो भवेच्छ्रुतिमनोहरः ॥
नेत्रवस्त्राञ्चलाग्राणि रज्जूकृत्य निवेशयेत् ।
रन्ध्रे ऽग्राणामनिर्गत्यै ग्रन्थिं च रचयेद्दृढम् ॥
ईदृक्तालयुगं कृत्वा तालमेकमथाञ्चलैः ।
आवेष्ट्य तर्जनीं वामामङ्गुष्ठेन च वेष्टनम् ॥
आक्रम्य तलमध्यस्थं धृत्वा तिर्यङ्मुखीकृतम् ।
शेषाङ्गुलीः प्रसार्योर्ध्वादक्षिणेन तु पाणिना ॥
तालमन्यतरस्यान्तलम्बमाना च लावलिम् ।
तर्जन्यङ्गुष्ठयोरग्रभागतस्तिर्यगाननम् ॥
धृत्वा तस्याग्रभागेण मध्यमन्यस्य ताडयेत् ।
अल्पनादो भवेच्छक्तिर्भूरिनादः शिवो भवेत् ॥
शिवे स्निग्धे घनो नादः शक्तौ स्यात्तद्विपर्ययः ।
वामेन धारयेच्छक्तिं शिवं दक्षिणपाणिना ॥

अश्वमेधफलं चैव प्राप्नुयाद्दोषमन्यथा ।
देवता तुम्बुरुर्युग्मे शक्तिः शक्तौ शिवे शिवः ॥
द्रुतादिसिद्ध्यै तन्नादधृतिरूर्ध्वाङ्गुलीकृता ।
कल्पनेत्युच्यते कार्यमस्य स्यात्तालधारणम् ॥
इति श्रीभोसलेन्द्रेण पाटाः सर्वे प्रकीर्तिताः ।

॥ इति तालक्षणम् ॥

नलिनीदलसंकाशौ कांस्यतालौ समाकृती ॥
त्रयोदशाङ्गुलौ वक्त्रे कांस्यजे त्र्यङ्गुलौ तले ।
मध्ये ऽङ्गुलमितौ निम्नौ तयोरन्यत्तु तालवत् ॥
पाटा झनकटामुख्याः सन्ति पाटान्तराण्यपि ।
नारदो देवतेत्युक्तमत्रैकनृपसूनुना ॥

॥ इति कांस्यताललक्षणम् ॥

अर्धाङ्गुलमिता पिण्डे घण्टा कांस्यमयी भवेत् ।
उच्छ्राये ऽष्टाङ्गुला वक्त्रे विशाला मूलतो ऽल्पिका ॥
सा च प्रासादसंबद्धा शलाकाऽऽकारधारिणी ।
मूले दण्डं त्रिशृङ्गाग्रं दधती मूलसंयुता ॥
षडङ्गुलायतं सार्धाङ्गुलपिण्डं च लम्बितम् ।
लोहजं लालकं गर्भे दधानां तामधोमुखीम् ॥
दण्डे धृत्वा टणत्कारबहुलं वादयेत्सुधीः ।
सा सर्वदेवता तज्ज्ञैर्वाद्यते देवताऽर्चने ॥

इति घण्टालक्षणम् ॥

## ॥ अथ प्रबन्धाध्यायः ॥

श्रीविद्यारसिकः सम्यग्धातुमातुविचक्षणः ।
प्रबन्धानां प्रकरणं करोति तुलजाधिपः ॥
अत्र प्रकरणे लोकव्यवहारानुरोधतः ।
प्रबन्धो रूपकं गेयं गीतं वस्त्विति पञ्चधा ॥
प्रसिद्धो योगादिना च गीतशब्द इतीरितः ।

तदुक्तं संगीतरत्नाकरे—

रञ्जकः स्वरसंदर्भो गीतमित्यभिधीयते ॥

गान्धर्वं गानमित्यस्य भेदद्वयमुदीरितम् ।
अनादिसंप्रदायं यद्गन्धर्वैः संप्रयुज्यते ॥
नियतं श्रेयसो हेतुस्तद्गान्धर्वं जगुर्बुधाः ॥
यत्तु वाग्गेयकारेण रचितं लक्षणान्वितम् ।
देशीरागादिषु प्रोक्तं तद्गानं जनरञ्जनम् ॥
तत्र गान्धर्वमुक्तं प्रागधुना गानमुच्यते ।
निबद्धमनिबद्धं तद् द्वधा निगदितं बुधैः ।
बद्धं धातुभिरङ्गैश्च निबद्धमभिधीयते ॥
आलप्तिर्बन्धहीनत्वादनिबद्धमितीरिता ।
सा चास्माभिः पुरा प्रोक्ता निबद्धं त्वधुनोच्यते ॥
संज्ञात्रयं निबद्धस्य प्रबन्धो वस्तु रूपकम् ।
इति प्रकीर्णके गेयं धातुरित्यभिधीयते ।
ठायालापप्रबन्धेषु गीतशब्दो ऽत्र यद्यपि ॥
साधारणो दृश्यते हि योगतः स तथा ऽप्यसौ ।
रूढ्या सालगसूडाख्यगीतभेदैकवाचकः ॥
अतः सालगसूडाख्यं गीतमादौ निरूप्यते ।
सूडशब्दो ऽत्र देशीयो गीतात्यर्थः प्रकीर्तितः ॥
छायालगेति शब्दापभ्रंशः सालग इत्ययम् ।
एष सालगसूडाख्यः सप्तधा कथितो बुधैः ॥

तथा चोक्तं भारतीये तत्रैव—

शुद्धश्छायालगश्चेति द्विविधः सूड उच्यते ।
एलादिः शुद्ध इत्युक्तो ध्रुवादिः सालगो मतः ॥ इति ।
तत्रोक्तः शुद्धसूडः प्राक्सालगस्त्वधुनोच्यते ।
आद्यो ध्रुवस्ततो मण्ठः प्रतिमण्ठो निसारुकः ॥
अड्डतालस्ततो रास एकताली त्वसौ मतः । इति ।
ते धात्वङ्गनिबद्धास्तु दृश्यन्ते हि ध्रुवादयः ॥
अथ सप्त निरूप्यन्ते धात्वङ्गान्यधुना क्रमात् ।
धातुः प्रबन्धावयवः स चतुर्धा प्रकीर्तितः ॥
निबद्धस्यादिमो भाग उद्ग्राह इति कीर्तितः ।
आदावुद्गृह्यते येन सो ऽयमुद्ग्राहसंज्ञकः ॥

द्वितीयभागो मेलाप उद्ग्राहध्रुवमेलनात् ।
ध्रुवत्वाद् ध्रुवसंज्ञस्तु तृतीयो भाग उच्यते ॥
आभोगस्त्वन्तिमो भागो गीतपूर्णत्वसूचकः ।
ध्रुवाभोगान्तराज्जातो धातुरन्यो ऽन्तराभिधः ।
स तु सालगसूडस्थरूपकेष्वेव दृश्यते ॥
वातपित्तकफा देहधारणाद्धातवो यथा ।
एवमेते प्रबन्धस्य धातवो देहधारणात् ॥
एष धातुः सर्वदेहव्यापकाङ्गविलक्षणः ।
अङ्गानामेकदेशत्वं प्रसिद्धं दृश्यते यतः ॥
स द्विधातुस्त्रिधातुश्च चतुर्धातुरिति त्रिधा ।
आभोगमेलापकयोः कचित् कचिदभावतः ॥
षडङ्गानि प्रबन्धस्य स्वरश्च बिरुदं पदम् ।
तेन्नकः पाटतालौ च पुंसो नेत्रादिकाङ्गवत् ॥
तत्र तेन पदे नेत्रे स्तः पाटबिरुदौ करौ ।
कराभ्यामुद्भवात् कार्ये कारणत्वोपचारतः ॥
प्रबन्धगतिहेतुत्वात् पादौ तालस्वरौ मतौ ।
सरिगाद्याः सप्त वर्णाः षड्जादिध्वनिवाचकाः ॥
स्वराभिव्यक्तिसंयुक्ताः स्वरास्तत्र प्रकीर्तिताः ।
संबुद्ध्यन्तपदैरेव नेतुर्यदुपबध्यते ॥
वर्णनं धैर्यशौर्यादेर्बिरुदं नाम तन्मतम् ।
क्रियाकारकसंबन्धरूपतो यन्निबध्यते ॥
वर्णनं धैर्यशौर्यादेस्तदेवात्र पदं स्मृतम् ।
अतो न संकराशङ्का बिरुदस्य पदस्य च ॥
तेन्नको नाम तेनेति शब्दस्य विकृतिर्भवेत् ।
विकृतत्वं च भाण्डीरभाषया ऽस्य समागतम् ॥
सो ऽयं तेनेति शब्दश्च तच्छब्दोपनिबन्धनः ।
तच्छब्दश्च भवेन्नित्यकल्याणब्रह्मवाचकः ॥
ओं तत्सदिति निर्देशात्तत्त्वमस्यादिवाक्यतः ।
तथा च यत्प्रबन्धेषु तेन तेनेति दृश्यते ॥
तस्यायमर्थस्तेनायं ब्रह्मणा मङ्गलात्मना ।
प्रबन्धे लक्ष्यत इति पाटो वाद्याक्षरोत्करः ॥

तयोर्द्विगुणिकां न्यस्येदङ्गुलार्धार्धसंमितम् ।
छिद्रं यस्याश्चतुर्थांशे नादोद्बोधविधायकम् ॥
हुडुक्का सा बुधैः प्रोक्ता तस्याश्च स्कन्धपट्टिकाम् ।
न्यस्य स्कन्धे दक्षिणेन पाणिना वादनं भवेत् ॥
उदरे पट्टिका योक्ता तस्यां वामं निवेशयेत् ।
देवता मातरः सप्त शार्ङ्गदेवेन कीर्तिताः ॥
कुर्वीत पाटहान् वर्णानिह ङंकारवर्जितान् ।
अत्रान्यैरधिकावुक्तौ मझंकारौ मनीषिभिः ॥
लक्ष्यज्ञास्त्वावजं प्राहुरिमां स्कन्धावजं तथा ।

॥ इति हुडुक्कालक्षणम् ॥

॥ एवं करटादिवाद्यानि ॥

॥ अथ घनवाद्यम् ॥

कांस्यजं घनवाद्यं स्यात्कांस्यमग्नौ सुशोधितम् ।
कांस्यजो वर्तुलस्तालः सपादद्यङ्गुलाननः ॥
मध्ये ऽस्याङ्गुलविस्तारो निम्नो रन्ध्रं च निम्नगम् ।
पादोनगुञ्जामात्रं स्यात् पिण्डस्तु यवमात्रकः ॥
सार्धाङ्गुलः स्यादुत्सेधः समा श्लक्ष्णशुभाकृतिः ।
कार्या तथा यथा नादो भवेच्छ्रुतिमनोहरः ॥
नेत्रवस्त्राञ्चलाग्राणि रज्जूकृत्य निवेशयेत् ।
रन्ध्रे ऽग्राणामनिर्गत्यै ग्रन्थिं च रचयेद् दृढम् ॥
ईदृक्तालयुगं कृत्वा तालमेकमथाञ्चलैः ।
आवेष्ट्य तर्जनीं वामामङ्गुष्ठेन च वेष्टनम् ॥
आक्रम्य तलमध्यस्थं धृत्वा तिर्यङ्मुखीकृतम् ।
शेषाङ्गुलीः प्रसार्योर्ध्वाद्दक्षिणेन तु पाणिना ॥
तालमन्यतरस्यान्तर्लम्बमाना च लावलिम् ।
तर्जन्यङ्गुष्ठयोरग्रभागतस्तिर्यगाननम् ॥
धृत्वा तस्याग्रभागेण मध्यमन्यस्य ताडयेत् ।
अल्पनादो भवेच्छक्तिर्भूरिनादः शिवो भवेत् ॥
शिवे स्निग्धे घनो नादः शक्तौ स्यात्तद्विपर्ययः ।
वामेन धारयेच्छक्तिं शिवं दक्षिणपाणिना ॥

अश्वमेधफलं चैव प्राप्नुयाद्दोषमन्यथा ।
देवता तुम्बुरुर्युग्मे शक्तिः शक्तौ शिवे शिवः ॥
द्रुतादिसिद्धये तन्नाद्धृतिरूर्ध्वाङ्गुलीकृता ।
कल्पनेत्युच्यते कार्यमस्य स्यात्तालधारणम् ॥
इति श्रीभोसलेन्द्रेण पाटाः सर्वे प्रकीर्तिताः ।

॥ इतिताललक्षणम् ॥

नलिनीदलसंकाशौ कांस्यतालौ समाकृती ॥
त्रयोदशाङ्गुलौ वक्त्रे कांस्यजे त्र्यङ्गुलौ तले ।
मध्येऽङ्गुलमितौ निम्नौ तयोरन्यत्तु तालवत् ॥
पाटा झनकटामुख्याः सन्ति पाटान्तराण्यपि ।
नारदो देवतेत्युक्तमत्रैकनृपसूनुना ॥

॥ इति कांस्यताललक्षणम् ॥

अर्धाङ्गुलमिता पिण्डे घण्टा कांस्यमयी भवेत् ।
उच्छ्राये ऽष्टाङ्गुला वक्त्रे विशाला मूलतो ऽल्पिका ॥
सा च प्रासादसंबद्धा शलाकाऽऽकारधारिणी ।
मूले दण्डं त्रिशृङ्गाग्रं दधती मूलसंयुता ॥
षडङ्गुलायतं सार्धाङ्गुलपिण्डं च लम्बितम् ।
लोहजं लालकं गर्भे दधानां तामधोमुखीम् ॥
दण्डे धृत्वा टणत्कारबहुलं वादयेत्सुधीः ।
सा सर्वदेवता तज्ज्ञैर्वाद्यते देवताऽर्चने ॥

इति घण्टालक्षणम् ॥

इति श्रीराजाधिराजभोसलकुलतिलकतुलजामहाराजविरचिते
संगीतसारामृते वाद्यप्रकरणम्
एकादशम्

## अथ प्रबन्धप्रकरणम् (१२)

श्रीविद्यारसिकः सम्यग्धातुमातुविचक्षणः ।
प्रबन्धानां प्रकरणं करोति तुलजाधिपः ॥
अत्र प्रकरणे लोकव्यवहारानुरोधतः ।
प्रबन्धो रूपकं गेयं गीतं वस्त्विति पञ्चधा ॥
प्रसिद्धो योगादिना च गीतशब्द इतीरितः ।

तदुक्तं संगीतरत्नाकरे—

रञ्जकः स्वरसंदर्भो गीतमित्यभिधीयते ॥
गान्धर्वं गानमित्यस्य भेदद्वयमुदीरितम् ।
अनादिसंप्रदायं यद्गन्धर्वैः संप्रयुज्यते ॥
नियतं श्रेयसो हेतुस्तद्गान्धर्वं जगुर्बुधाः ॥
यत्तु वाग्गेयकारेण रचितं लक्षणान्वितम् ।
देशीरागादिषु प्रोक्तं तद्गानं जनरञ्जनम् ॥
तत्र गान्धर्वमुक्तं प्रागधुना गानमुच्यते ।
निबद्धमनिबद्धं तद् द्वधा निगदितं बुधैः ।
बद्धं धातुभिरङ्गैश्च निबद्धमभिधीयते ॥
आलप्तिर्बन्धहीनत्वादनिबद्धमितीरिता ।
सा चास्माभिः पुरा प्रोक्ता निबद्धं त्वधुनोच्यते ॥
संज्ञात्रयं निबद्धस्य प्रबन्धो वस्तु रूपकम् ।
इति प्रकीर्णके गेयं धातुरित्यभिधीयते ।
ठायालापप्रबन्धेषु गीतशब्दो ऽत्र यद्यपि ॥
साधारणो दृश्यते हि योगतः स तथा ऽप्यसौ ।
रूढ्या सालगसूडाख्यगीतभेदैकवाचकः ॥
अतः सालगसूडाख्यं गीतमादौ निरूप्यते ।
सूडशब्दो ऽत्र देशीयो गीतात्यर्थैः प्रकीर्तितः ॥
छायालगेति शब्दापभ्रंशः सालग इत्ययम् ।
एष सालगसूडाख्यः सप्तधा कथितो बुधैः ॥

तथा चोक्तं भारतीये तत्रैव—

शुद्धश्छायालगश्चेति द्विविधः सूड उच्यते ।
एलादिः शुद्ध इत्युक्तो ध्रुवादिः सालगो मतः ।। इति
तत्रोक्तः शुद्धसूडः प्राक्सालगस्त्वधुनोच्यते ।
आद्यो ध्रुवस्ततो मण्ठः प्रतिमण्ठो निसारुकः ।।
अड्डतालस्ततो रास एकताली त्वसौ मतः । इति ।
ते धात्वङ्गनिबद्धास्तु दृश्यन्ते हि ध्रुवादयः ।।
अथ सप्त निरूप्यन्ते धात्वङ्गान्यधुना क्रमात् ।
धातुः प्रबन्धावयवः स चतुर्धा प्रकीर्तितः ।।
निबद्धस्यादिमो भाग उद्ग्राह इति कीर्तितः ।
आदावुद्गृह्यते येन सोऽयमुद्ग्राहसंज्ञकः ।।
द्वितीयभागो मेलाप उद्ग्राहध्रुवमेलनात् ।
ध्रुवत्वाद् ध्रुवसंज्ञस्तु तृतीयो भाग उच्यते ।।
आभोगस्त्वन्तिमो भागो गीतपूर्णत्वसूचकः ।
ध्रुवाभोगान्तराज्जातो धातुरन्यो ऽन्तराभिधः ।
स तु सालगसूडस्थरूपकेष्वेव दृश्यते ।।
वातपित्तकफा देहधारणाद्धातवो यथा ।
एवमेते प्रबन्धस्य धातवो देहधारणात् ।।
एष धातुः सर्वदेहव्यापको ऽङ्गविलक्षणः ।
अङ्गानामेकदेशत्वं प्रसिद्धं दृश्यते यतः ।।
स द्विधातुस्त्रिधातुश्च चतुर्धातुरिति त्रिधा ।
आभोगमेलापकयोः क्वचित् क्वचिदभावतः ।।
षडङ्गानि प्रबन्धस्य स्वरश्च बिरुदं पदम् ।
तेन्नकः पाटतालौ च पुंसो नेत्रादिकाङ्गवत् ।।
तत्र तेन पदे नेत्रे स्तः पाटबिरुदौ करौ ।
काराभ्यामुद्भवात् कार्ये कारणत्वोपचारतः ।।
प्रबन्धगतिहेतुत्वात् पादौ तालस्वरौ मतौ ।
सरिगाद्याः सप्त वर्णाः षड्जादिध्वनिवाचकाः ।।
स्वराभिव्यक्तिसंयुक्ताः स्वरास्तत्र प्रकीर्तिताः ।
संबुद्ध्यन्तपदैरेव नेतुर्यदुपबध्यते ।।

वर्णनं धैर्यशौर्यादेर्बिरुदं नाम तन्मतम् ।
क्रियाकारकसंबन्धरूपतो यन्निबध्यते ॥
वर्णनं धैर्यशौर्यादेस्तदेवात्र पदं स्मृतम् ।
अतो न संकराशङ्का बिरुदस्य पदस्य च ॥
तेन्नको नाम तेनेति शब्दस्य विकृतिर्भवेत् ।
विकृतत्वं च भाण्डीरभाषया ऽस्य समागतम् ॥
सो ऽयं तेनेति शब्दश्च तच्छब्दोपनिबन्धनः ।
तच्छब्दश्च भवेन्नित्यकल्याणब्रह्मवाचकः ॥
ओं तत्सदिति निर्देशात्तत्त्वमस्यादिवाक्यतः ।
तथा च यत्प्रबन्धेषु तेन तेनेति दृश्यते ॥
तस्यायमर्थस्तेनायं ब्रह्मणा मङ्गलात्मना ।
प्रबन्धे लक्ष्यत इति पाटो वाद्याक्षरोत्करः ॥
रुद्रवीणासमुद्भूताः पाटास्तकतकादयः ।
शङ्खादिमुखवाद्योत्थाः पाटास्थुलथुगादयः ॥
उरोवाद्यभवाः पाटा रन्तदन्तकिणादयः ।
एवमन्ये ऽपि विज्ञेयाः पाटा लक्ष्यानुसारतः ॥
तालप्रकरणे सप्रपञ्चो ऽयमभिधास्यते ।
इत्यङ्गानि षडुक्तानि तुलजावनिजानिना ॥
ध्रुवादीनां लक्षणानि क्रमशो ऽथ ब्रुवे ऽधुना ।
उद्ग्राहं भिन्नमात्वेकधातुं खण्डद्वयान्वितम् ॥
उद्ग्राहस्वरतः किंचिदुच्चस्वरसमन्वितम् ।
खण्डं कुर्यादिदं खण्डद्वयं द्विर्गेयमिष्यते ॥
ततो द्विखण्ड आभोगो भिन्नमात्वेकधातुकः ।
तथोच्चस्वरसंयुक्तं स्तुत्यनामाङ्कितं परम् ॥
खण्डमुद्ग्राहाद्यखण्डे न्यासः सध्रुवको भवेत् ।
एकादशाक्षरात्खण्डादेकैकाक्षरवर्धितैः ॥
खण्डैर्ध्रुवाः षोडश स्युः षड्विंशत्यक्षरावधि ।
जयन्तः शेखरोत्साहौ ततो मधुरनिर्मलौ ॥
कुन्तलः कोमलश्चारो नन्दनश्चन्द्रशेखरः ।
कामोदो विजयाख्यश्च कंदर्पो जयमङ्गलः ॥

तिलको ललितश्चेति संज्ञास्तेषां क्रमादिमाः ।
आदितालेन शृङ्गारे जयन्तो गीयते बुधैः ॥
स नेतृश्रोतृगातॄणामायुःश्रीवर्धनो मतः ।
वृद्धिसौभाग्यदो वीरे निःसारौ शेखरो भवेत् ॥
प्रतिमण्ठेन हास्ये स्यादुत्साहो वंशवृद्धिकृत् ।
मधुरो भोगदो गेयः करुणे ह्यर्लालया ॥
क्रीडातालेन शृङ्गारे निर्मलः सुमतिप्रदः ।
लघुशेखरतालेन कुन्तलो ऽभीष्टदो ऽद्भुते ॥
कामोदो विप्रलम्भे स्याज्झम्पातालेन सिद्धिदः ।
हर्षोत्कर्षप्रदश्चारो वीरे निःसारुतालतः ॥
नन्दनो वीरशृङ्गार एकताल्येष्टसिद्धिदः ।
वीरे हास्ये च शृङ्गारे प्रतिमण्ठेन गीयते ॥
अभीष्टफलदः श्रोतृगातॄणां चन्द्रशेखरः ।
प्रतिमण्ठेन शृङ्गारे कामोदो ऽभीष्टकामदः ॥
हास्ये द्वितीयतालेन विजयो नेतुरायुषे ।
हास्यशृङ्गारकरुणेष्वादितालेन गीयते ॥
कंदर्पो भोगदो नॄणां श्रीसदाशिवसंमतः ।
क्रीडातालेन शृङ्गारे वीरे च जयमङ्गलः ॥
जयोत्साहप्रदः पुंसां ध्रुवकस्तिलकाभिधः ।
रसे वीरे च शृङ्गार एकताल्या प्रगीयते ॥
प्रतिमण्ठेन शृङ्गारे ललितः सर्वसिद्धये ।
स्याद्वर्णनियमः सर्वखण्डे खण्डद्वये तथा ॥
यथोक्तान्यो जयन्तादीन्गायेन्निपुणया धिया ।
सर्वक्रतुफलं तस्येत्यवोचन्मुनिसत्तमः ॥
॥ इति ध्रुवलक्षणम् ॥

एवं ध्रुवं निरूप्याथ मण्ठलक्षणमुच्यते ।
यतिद्वयं वैकयतिर्यत्रोद्ग्राहाख्यखण्डके ॥
ततः खण्डं ध्रुवाख्यं द्विस्ततो वैकल्पिको ऽन्तरः ।
तं गीत्वा ध्रुवमागत्य वा ऽभोगो गीयते सकृत् ॥
ध्रुवे न्यासस्ततः प्रोक्तः स मण्ठो मण्ठतालतः ।

जयप्रियो मङ्गलश्च सुन्दरो वल्लभस्तथा ॥
कलापः कमलश्चेति षड् भेदा मण्ठके मताः ।
षट्प्रकारो मण्ठतालो रूपकं तेन भिद्यते ॥
वीरे जयप्रियो गेयो मण्ठेन जगणात्मना ।
मङ्गलो भेन शृङ्गारे सुन्दरः सेन तद्रसे ॥
वल्लभो रेण करुणे कलापो नगणेन तु ।
विरामान्तेन गातव्यो रसे हास्ये विचक्षणैः ॥
विरामान्तद्रुतद्वंद्वाल्लघुना कमलो ऽद्भुते ।

॥ इति मण्ठलक्षणम् ॥

मण्ठवत्प्रतिमण्ठादेर्लक्ष्मोद्ग्राहादिकं मतम् ।
झम्पातालेन कमलो ऽप्यद्भुतो रसतो भवेत् ॥

॥ इति विट्ठलीये ॥

रङ्गोद्योतेन तालेन तथा चच्चत्पुटेन च ।
गीतं मण्ठाभिधं प्राहुः केचिल्लक्ष्यविशारदाः ॥
इति मण्ठाभिधस्तालो विशेषो ऽत्र प्रकीर्तितः ।
तत्र च प्रतिमण्ठेन तालेन प्रतिमण्ठकः ।
चतुर्धा सो ऽमरस्तारो विचारः कुन्द इत्यपि ॥
प्रतिमण्ठादिवस्तूनां लक्षणं मण्ठवन्मतम् ।
उद्ग्राहादिगतः सर्वभेदस्तालगतो भवेत् ॥

॥ इति विट्ठलीये ॥

अमरो गुरुणैकेन शृङ्गारे परिगीयते ।
विरामान्तद्रुतद्वंद्वाल्लघुद्वंद्वेन जायते ॥
ताराख्यः प्रतिमण्ठो ऽसौ रसयोर्वीररौद्रयोः ।
लघुद्वयाद्विरामान्ताद्विचारः करुणे भवेत् ॥
कुन्दो विराममध्येन लत्रयेणाद्भुते भवेत् ।
ते शृङ्गारे ऽपि चत्वारो गीयन्ते लक्ष्मवेदिभिः ॥

॥ इति प्रतिमण्ठलक्षणम् ॥

बद्धो निःसारुतालेन प्रोक्तो निःसारुको बुधैः ।
वैकुन्दानन्दकान्ताराः समरो वाञ्छितस्तथा ॥

विशालश्चेति स प्रोक्तः षड्विधः पूर्वसूरिभिः ।
विशालश्चेति निःसारुगीतभेदाः षडीरिताः

॥ इति ग्रन्थान्तरे ॥

प्लुतद्वंद्वाल्लघुद्वंद्वाद्वैकुन्दो मङ्गले भवेत् ।
कुर्यादानन्दमानन्दे विरामान्तद्रुतद्वयात् ॥

॥ इति वैकुन्दानन्दौ ॥

कान्तारो लगुरुभ्यां स्याद्विप्रलम्भे स गीयते ।

॥ इति कान्तारः ॥

लघुद्वयाद्विरामान्तात्समरो वीरगोचरः ॥

॥ इति समरः ॥

लघुत्रयाद् द्रुतद्वंद्वाद्वाञ्छितो वाञ्छितप्रदः ।

॥ इति वाञ्छितः ॥

तेन द्रुताभ्यां लघुना संभोगे स्याद्विशालकः ॥

॥ इति विशालः ॥

विट्ठलीये—

कुडुक्काभिधतालेन वैकुन्दो मङ्गलो भवेत् ।
क्रीडातालेन चानन्द आनन्दे गीयते सदा ॥
विप्रलम्भाख्यशृङ्गारे कान्तारो रतितालतः ।
हंसलीलेन तालेन समये धीरगोचरः ॥

॥ इति चतुर्भेदाः ॥

॥ इति षड्विधो निःसारुकः ॥

अड्डतालेन संयुक्तमड्डतालं प्रचक्षते ॥
निःशङ्कः शङ्कशीलौ च चारो ऽथ मकरन्दकः ।
विजयश्चेति स प्रोक्तः षड्विधः पूर्वसूरिभिः ॥
लगुरुभ्यां द्रुतद्वंद्वान्निःशङ्को विस्मये भवेत् ।

॥ इति निःशङ्कः ॥

लघोर्द्रुतद्वयेन स्याच्छङ्कः शृङ्गारवीरयोः ॥
'शङ्कः स्यात्प्रतितालतः' इति विट्ठलीये

॥ इति शङ्कः ।

शान्ते शीलो विरामान्तद्रुतद्वंद्वाल्लघोर्भवेत् ।
'झम्पातालेन शान्ते च शीलः स्यात्' इति विट्ठलीये ।

॥ इति शीलः ॥

द्रुतद्वंद्वाल्लगाभ्यां स्याच्चारो वीरे ऽद्भुते रसे ।

॥ इति चारः ॥

शृङ्गारे मकरन्दः स्याद् द्रुतद्वंद्वात्परे गुरौ ॥

॥ इति मकरन्दः ॥

विजयाख्यो रसे वीरे द्रुताभ्यां लघुना भवेत् ।

॥ इति विजयः ॥

॥ इति षड्विधो ऽड्डतालः ॥

रासको रासतालेन स चालापादिगानतः ॥
चतुर्विधो भवेदेष न लक्ष्ये दृश्यते तथा ।
विनोदो वरदो नन्दः कम्बुजश्चेत्यनुक्रमात् ॥
आलापान्तध्रुवपदाद्विनोदः कौतुके भवेत् ।

॥ इति विनोदः ॥

ध्रुवादालापमध्यात्तु वरदो देवतास्तुतौ ॥

॥ इति वरदः ॥

खण्डमाद्यं द्विखण्डस्योद्ग्राहस्यालापनिर्मितम् ।
यस्यासौ रासको नन्दो गीयते ऽद्भुत एव सः ॥

॥ इति नन्दः ॥

आलापादेर्ध्रुवपदात्कम्बुजः करुणे भवेत् ।

॥ इति कम्बुजः ॥

सर्वेषु रासकेष्वेषु द्विखण्डोद्ग्राहकल्पना ॥

॥ इति चतुर्विधरासलक्षणम् ॥

एकताली भवेत्तालेनैकताल्या त्रिधा च सा ।
रमा च चन्द्रिका तद्वद्विपुलेत्यथ लक्षणम् ॥
सकृद्विरतिरुद्ग्राहो ऽन्तरस्त्वक्षरनिर्मितः ।
यस्यामसौ रमा सा च प्रथमो भेद इष्यते ॥

॥ इति रमा ॥

उद्ग्राहो द्विदलो यस्यामालापरचितो ऽन्तरः ।
सैकताली चन्द्रिकाऽऽख्या द्वितीयो भेद इष्यते ॥

॥ इति चन्द्रिका ॥

आलापपूर्वकोद्ग्राहा विपुलाऽऽख्यैकतालिका ।
आलापो गमकालप्तिरक्षरे वर्जिता मता ॥
सैव प्रयोगशब्देन तुलजेन्द्रेण कीर्तिता ।

॥ इति विपुला ॥

॥ इति त्रिविधैकतालीलक्षणम् ॥

इति सालगसूडस्थगीतानां लक्ष्मकीर्तनम् ।
श्रीपुरंदरदासाद्यैरभियुक्तैः पुरातनैः ॥
प्रयुक्तेषु प्रसिद्धेषु लक्ष्येषु विविधेष्वपि ।
ध्रुवादिषु त्वदुक्तानि लक्षणानि महामते ॥
न दृश्यन्ते तत्र कथं लक्ष्यलक्षणसंगतिः ।
इति चेदुच्यते श्रीमद्भोसलावनिजानिना ॥
ध्रुवादीनां लक्षणानि हृदि सम्यग्विभावय ।
एवं कृते ततः शङ्का स्वयमेव निवर्तते ॥
तथा ऽन्यत्र जयन्ताख्यध्रुवोदाहृतिरुच्यते ।
शृङ्गारे रास इत्यादिविशिष्टैतस्य लक्षणम् ॥
अस्योदाहरणं पुरंदरदासानां सूलादिः ।

देवगांधाररागे रासताले—'लघ्वादितालो लोके ऽसौ रासः' इति रासलक्षणम् । 'द्रौलौ द्वितीयके' इति द्वितीयतालस्य लक्षणम् ।

अत्र द्वयोर्व्यत्यासेन व्यवहारस्तु लोकतः ।

तदनुरोधेनात्रापि दृश्यते—

सा सा ग स स नि  सा गा मा पा पा नि ध  म ध प  म  म ग रि स
अ सु ग ल ज  क र ब धा वी क रु रो ग  व  आ  वि गु
रि स नि  सा गा म प ध प  म म ग रि स रि स नि  मगागारिरिसा ।
व  वि उ डु  ड  ध  नि  ह

अनेनैव धातुना द्वितीयखण्डं रवेयकं गेयम् ।

पा पा पा स स स नि नि प प म मा मा म्म ग म म ग ग स स नि
प मो भिर य न न प न्य ग द्द प प प

सा सा गा मा पा धा प म प म ग गा मा प प सा स नि नि प
उ व नि श ले म णे प ले

पा स स पा ध प म म ध प म म ग रि स म मा मा मा ग म
यो गा णि द्रे ए यो आ वि इ य दाम छ डा

म ग ग स सा स नि स ध प म प प म म ग रि स रि स नि
न नु द य र दि र रु रु श उ ल डु डु डु

सा सा ग स इत्युद्ग्राहः । द्विरभ्यस्तः पूर्ववदेव पुनर्गीयते । सा सा स
ह सु ग ल म डु स

रि स नि स सा गा म प इति पुनरावर्तनम् । अथाभोगः—
रि ए धु

पा पा पा स स स नि नि प प म इत्यादि स्तुत्यनामाङ्कितखण्डद्वयं
नीरं ए नु ल द द द द

हसु । इदं त्रिधातुकं जयन्तध्रुवाख्यमाद्यं गीतम् । इति ध्रुवखण्डेन सहित-मित्युक्तत्वात् ॥

अथ मण्ठाख्यं द्वितीयं गीतम् । रगणमण्ठेन तालेन गेयम् । 'वल्लभो रेण करुणे' इति तल्लक्षणम् । षड्प्रकारे मण्ठताले चतुर्थो भेदः । अस्योदाहरण-मत्रैव लिख्यते—

पससासनिपनिपपम मम्मा मम्मागपममगसा रिसासनिपनीनिस्ससा गम्मपाप्पमगमा सास्सनिधनीधपाममापपममगस इति ध्रुवः । अत्र न्यासः । अथाभोगः । पससासनिपनिपममम्मासममममगपममगस इत्याभोगः । ध्रुवो न्यासः ।

एवं ध्रुवमण्ठादयः सूडक्रमस्था गीतविशेषास्तत्तल्लक्षणविशेषतो योज-नीयाः । अतिप्रसिद्धत्वादत्र विशेषतो न प्रदर्शिताः । एषां नियुक्तत्वम् ॥

अथ प्रतिमण्ठलक्षणं संगीतरत्नाकरे त्वेवमुक्तम्—

मण्ठवत्प्रतिमण्ठादेर्लक्ष्मोद्ग्राहादिकं मतम् ।
तथा ऽप्येषां विशेषस्तु प्रत्येकं प्रतिपाद्यते ॥
तत्र च प्रतिमण्ठेन तालेन प्रतिमण्ठकः ।
चतुर्धा सो ऽमरस्तारो विचारः कुन्द इत्यपि ।
अमरो दो विरामान्तः शृङ्गारे स विधीयते ॥ इति ॥

अत्र 'विरामान्तद्रुतो ऽमरः' प्रतिमण्ठ उक्तः ।

'अमरो गुरुणैकेन' इति विट्ठलीये । अनयोर्द्वयोर्मध्ये विरामान्तद्रुतस्य प्रसिद्धरूपकतालार्धकालत्वात्प्रसिद्धलक्षणानुगण्यं युज्यते । 'गुरुरेको ऽमरः' इति पक्षे प्रसिद्धरूपकानुगुण्याभावान्न युज्यते द्रुतो विरामान्तरूपक एव मार्गभेदेन । तथा च प्रयोगे ऽस्तीतितिती इत्यादिः । इदं सर्वं तालप्रकरणे स्फुटं निरूपयिष्यामः । प्रयोक्तिरुच्छाते ध्रुवादीनां पौर्वापर्यं तत्र दृश्यते । अथ वा जयन्तादिषु विहृत्ततालभेदकृततत्तदाख्यो ध्रुव इति ज्ञेयः । तत्तद्देशस्थप्रयोगानुसारि लक्षणमपि विट्ठलेनोदाहृतम्—

रङ्गोद्द्योतेन तालेन तथा चच्चत्पुटेन च ।
गीतं मट्ठाभिधं प्राहुः केचिल्लक्ष्यविशारदाः ॥
सूडक्रमं वदन्त्यन्ये केचिल्लक्ष्यविशारदाः ।
ध्रुवो मट्ठो रूपकश्च झम्पतालस्ततः परम् ॥
त्रिपुटश्चाडुताळाख्यश्चैकतालीति च क्रमात् । इति

अयमेव क्रमः प्रसिद्धसालगसूडस्थेषु सप्तसु गीतेष्वाद्यो ध्रुवो ध्रुवतालेन बद्धः । ध्रुवताललक्षणं तु—

वीणा वाद्या ध्रुवे त्वादौ लघू द्वौ चतुरक्षरौ ।
षडक्षरोच्चारणसंमितोऽथ लघुशेखरः ॥
चतुर्दशाक्षरमितावाहत्यैतावुभौ ध्रुवौ ।

इत्युक्तम् । तत्रैव सुळादिषु प्रसिद्धः प्रयोगः । अथ निःसारुगीतभेदाः षट् ।

बद्धो निःसारुतालेन निःसारुरिति कीर्तितः ।
वैकुन्दानन्दकान्तारसमरा वाञ्छितस्तथा ॥
विशालश्चेति निःसारुगीतभेदाः षडीरिताः ।

तत्र वैकुन्दलक्षणम्—

द्रुतद्वंद्वाल्लघुद्वंद्वाद्वैकुन्दो मङ्गले भवेत् ।

॥ इति रत्नाकरे ॥

कुडुक्काभिधतालेन वैकुन्दो मङ्गले भवेत् ।

इति विट्ठलीये । अत्र विशेषः । कुडुक्के चतुर्लघ्वक्षरोच्चारणमितो लघुर्दृश्यते । तस्योदाहरणमत्रैव पप्पा निनिपा निपपम मम्मा गमपम गरि सा इत्यादौ चतुर्लघ्वक्षरोच्चारमितो लघुः स्पष्टः । पञ्चलघ्वक्षरोच्चारमितो लघुरङ्कुतालः स्पष्टतरः । अनयोर्लघुमानभेदनार्थपुनरुक्त्याशङ्कापरिहारः । अत्रैव जात्याख्ये पञ्चलघ्वक्षरोच्चारमितलघुमानद्रु(?)तालः प्रयुक्तः पनीसार्गारिरिसरिसा मगमापधपमगसासा इत्यादिः । एकताल्यां त्वेकलघ्वात्मक आदिताल एवैक-द्रुतात्मैकतालत्वेन व्यवह्रियते । सरिगम रिगमप गमपध इत्यलंकारे ऽपि तथा प्रयोगः ।

एवं सालगसूडस्थसूलादिक्रम ईरितः ।
सूलादिभेदा बहवो ऽप्येवमित्यवधार्यताम् ॥
तालैः सप्तभिरेवैतैर्ध्रुवाद्यैर्लोकविश्रुतैः ।
प्रयुज्यन्ते पृथग्गीतिविशेषा लक्ष्यकोविदैः ॥
बहूनि गायन्ति गीतान्येतेष्वेकैकतालतः ।
तद्विशेषाः प्रबन्धाश्च तथा भाषापदानि च ॥
दरुध्रुवपदाद्याश्च नानादेशसमुद्भवाः ।
गीयन्ते तद्विशेषास्तु तत्तत्तालकृता मया ॥
अतः परं निरूप्यन्ते प्रबन्धास्तद्विभेदतः ।
ननु प्रबध्यत इति व्युत्पत्त्या नास्ति भिन्नता ॥
अतो गीतात्प्रबन्धस्य पृथक्कस्मान्निरूपणम् ।
उच्यते षड्भिरङ्गैश्च चतुर्भिर्धातुभिश्च यः ॥
निबद्धः स्वरसंदर्भस्तस्मिन्नेव हि भूरिशः ।
प्रबन्ध इति लोकानां व्यवहारो निरीक्ष्यते ॥
अतः प्रबन्धशब्दो ऽत्र निरूढः पङ्कजादिवत् ।
गीतप्रबन्धयोरेवं भेदो यदि न कल्प्यते ॥
कुतः सिध्येच्चतुर्दण्डी कुतो गोपालनायकः ।
प्रयुक्तं च चतुर्दण्डीत्यतो गीतप्रबन्धयोः ॥

भेदः सिद्धस्ततः कार्यं प्रबन्धस्य निरूपणम् ।
निबद्धः षड्भिरङ्गैश्च चतुर्भिर्धातुभिश्च यः ॥
स्वरौघः स प्रबन्धः स्यादुक्ता एवाङ्गधातवः ।
मेदिन्यानन्दिनी चैव दीपनी भाविनी तथा ॥
तारावलीति पञ्च स्युः प्रबन्धानां तु जातयः ।
अङ्गैः षड्जादिभिः षड्भिर्मेदिनी पञ्चभिः पुनः ॥
अङ्गैरानन्दिनी जातिर्दीपनी चतुरङ्गिका ।
भाविनी त्रिभिरङ्गैः स्याद् द्वाभ्यां तारावली मता ॥
प्रबन्धाः पञ्चजातीयाः सर्वलोकानुवर्तिनः ।
एकैकजातिसंयुक्तांस्तत्रानेकयुतान्पृथक् ॥
प्रबन्धे सुखबोधाय प्रबन्धानुद्दिशाम्यहम् ।
श्रीरङ्गः श्रीविलासश्च पञ्चभङ्गिरतः परम् ॥
पञ्चाननोमातिलकौ करणं सिंहलीलकः ।
मेदिनीजातिमन्तोऽमी प्रबन्धाः सप्त कीर्तिताः ॥
पञ्चतालेश्वरो वर्णस्वरो वस्त्वभिधानकः ।
विजयस्त्रिपदाख्यश्च ततो हरविलासकः ॥
चतुर्मुखः पद्धडिः श्रीवर्धनो हर्षवर्धनः ।
आनन्दिनीजातिमन्तः प्रबन्धा दश कीर्तिताः ॥
सुदर्शनः स्वराङ्कश्च त्रिभङ्गी चैव कुन्तकः ।
वदनं चेति पञ्चैते दीपनीजातिसंयुताः ॥
वर्णो गद्यं ततः कंदः कैवाडश्चाङ्कचारिणी ।
वर्तन्यार्या च गाथा च ततः क्रौञ्चपदः स्मृतः ॥
कलहंसस्तोटकश्च हंसलीलश्चतुष्पदी ।
वीरश्रीर्मङ्गलाचारो दण्डकश्चेत्यमी पुनः ॥
अष्ट प्रबन्धा उद्दिष्टा भाविनीजातिसंगताः ।
एला ढेङ्की झोम्पटश्च लम्भरासैकतालिकाः ॥
चक्रवाकः स्वरार्धश्च मातृकाम्बानेकुट्टनी ।
त्रिपदी षट्पदी चैव झोम्पटश्चर्चरी तथा ॥
चर्या च राहटी चैव धवलो मङ्गलस्तथा ।
ओवी लोली डोल्लरी च दन्ती द्वाविंश इत्यमी ॥

तारावलीजातिमन्तः प्रबन्धाः परिकीर्तिताः
एकैकजातिमन्तोऽमी प्रबन्धाः षड्भिरीरिताः ॥
अथ प्रबन्धा उच्यन्ते जातिद्वयसमन्विताः ।
हयलीलेति च तथा गजलीलेत्युभाविमौ ॥
तारावलीदीपनीभ्यां समेताविति निर्णयः ।
द्विपदी च द्विपदको व्रतं चेति त्रयस्त्वमी ॥
प्रबन्धा भाविनीतारावलीजातिद्वयान्विताः ।
घटनामा प्रबन्धस्तु दीपनीभाविनीयुतः ॥
एते द्विजातिमन्तः षट् प्रबन्धाः परिकीर्तिताः ।
तालार्णवस्तथा रागकदम्बश्चेत्युभाविमौ ॥
मेदिनीप्रमुखाभिश्च पञ्चभिर्जातिभिर्युतौ ।
अथोद्देशक्रमेणैषां लक्षणं प्रतिपाद्यते ॥
श्रीरङ्गाख्यप्रबन्धस्य चतस्रः खण्डिकाः स्मृताः ।
प्रतिखण्डिकमेकैको रागस्तालस्य वाञ्छितः ॥
प्रतिखण्डिकमप्यन्ते प्रयोज्यं नियमात्पदम् ।
तदन्यानि स्वरादीनि पञ्चाङ्गान्यैच्छिकक्रमात् ॥
प्रयोज्यान्यत्र चाद्यार्धं प्रतिखण्डिकमस्ति यत् ।
स उद्ग्राहो द्वितीयार्धं ध्रुव इत्येष निर्णयः ॥
न स्तामालापकाभोगावाभोगविरहेऽपि च ।
तुरीयायाः खण्डिकाया अन्ते नामाङ्कनं पदैः ॥
गातृनेतृप्रबन्धानां कार्यं तेन द्विधातुकः ।
प्रबन्धोऽयं भवेच्छेदस्तालाद्यनियमेन च ॥
निबद्धत्वादनिर्युक्त इति श्रीरङ्गलक्षणम् ।
श्रीविलासप्रबन्धस्य कर्तव्याः पञ्च खण्डिकाः ॥
प्रतिखण्डिकमेकैको रागस्तालश्च वाञ्छितः ।
प्रतिखण्डिकमप्यन्ते प्रयोक्तव्याः स्वराः परम् ॥
ऐच्छिकेन क्रमेणैव योज्यं शिष्टाङ्गपञ्चकम् ।
द्विधातुत्वादिकं सर्वं श्रीरङ्गवदिति स्थितिः ॥
पञ्चभङ्गिप्रबन्धस्य खण्डिके द्वे प्रकल्पयेत् ।
प्रतिखण्डिकमेकैको रागस्तालश्च वाञ्छितः ॥

तेनको ऽन्ते प्रयोक्तव्यः प्रतिखण्डिकमत्र तु ।
शिष्टमन्यत्परिज्ञेयं श्रीरङ्गाख्यप्रबन्धवत् ॥
पञ्चभङ्गिरसावेव द्वयोः खण्डिकयोः पृथक् ।
अन्ते पदान्वितश्चेत्स्यात्तदा पञ्चाननो भवेत् ॥
अन्यत्पूर्ववदुन्नेयमथोमातिलकाभिधे ।
प्रबन्धे खण्डिकास्तिस्रः कर्तव्याः प्रतिखण्डिकम् ॥
रागस्तालस्तथैकैको वाञ्छितः प्रतिखण्डिकम् ।
अन्ते तु बिरुदं योऽयमन्यच्छ्रीरङ्गवद्भवेत् ।
श्रीरङ्गाद्यास्तु पञ्चोमातिलकान्ता इमे स्मृताः ।
षड्भिरङ्गैर्निबद्धत्वान्मेदिनीजातिसंगताः ॥
अथोद्देशक्रमप्राप्तं करणं लक्ष्यते स्फुटम् ।
इष्टस्वरे प्रबन्धस्यारम्भो मोक्षोंशकस्वरैः ॥
रासरतालो द्रुताख्यस्तु लय एतैः समन्तता ।
ज्ञेयं करणसामान्यलक्ष्म तच्चाष्टधा मतम् ॥
स्वराद्यं पाटपूर्वं च प्रबन्धाद्यं पदादिमम् ।
तेन्नाद्यं बिरुदाख्यं च चित्राख्यं मिश्रपूर्वकम् ॥
एतेषां लक्षणान्यष्टकरणानां क्रमाद् ब्रुवे ।
यत्रोद्ग्राहध्रुवौ सान्द्रस्वरबद्धौ पदैः पुनः ॥
आभोगः स्याद्रागनेतृप्रबन्धाह्वयचिह्नितः ।
तत्तु स्वराद्यकरणं तद्वदन्यान्यपि स्फुटम् ॥
किं तूद्ग्राहध्रुवस्थाने तेषां भेदो ऽस्ति तद् ब्रुवे ।
स्यात्पाटकरणं बद्धं हस्तपाटैर्युतस्वरैः ॥
क्रमव्यत्यासभेदेन तदपि द्विविधं स्मृतम् ।
आदौ स्वरस्ततो हस्तपाटश्चेत्क्रम उच्यते ॥
प्रथमं हस्तपाटो ऽथ स्वरश्चेत्तदुदीरितम् ।
व्यत्यासपाटकरणं मतङ्गभरतादिभिः ॥
स्वरैर्मुरजपाटैश्च यत्रोद्ग्राहध्रुवावुभौ ।
क्रमेणोपनिबध्येते तद् बद्धकरणं विदुः ॥
स्वरैः पदैर्वा रच्येते यत्रोद्ग्राहध्रुवौ क्रमात् ।
तदा पदाद्यकरणं मन्यन्ते गीतकोविदाः ॥

यत्रोद्ग्राहस्वरैर्बद्धस्तेनकैस्तु ध्रुवो भवेत् ।
तत्तेनकरणं नाम प्रबन्धं परिचक्षते ॥
स्वरैश्च बिरुदैः स्यातां यत्रोद्ग्राहध्रुवौ क्रमात् ।
बिरुदाद्यं तदा प्रोक्तं करणं लक्ष्यकोविदैः ॥
स्वरैश्च हस्तपाटैश्च यत्रोद्ग्राहो विरच्यते ।
पाटैर्मुरजसंभूतैः पदैश्च स्यादथ ध्रुवः ॥
तच्चित्रकरणं नाम प्रबन्धं सूरयो विदुः ।
स्वरैः पाटैस्तेनकैश्च यत्रोद्ग्राहो निबध्यते ॥
तैरेव चेद् ध्रुवो ऽपि स्यात्तन्मिश्रकरणं विदुः ।
ननु चित्रस्य मिश्रस्य को भेद इति चेच्छृणु ॥
तिलतण्डुलवज्जातो मिथो ऽवयवसंकरः ।
चित्रत्वं मिश्रता नाम भवेत्क्षीराम्बुनोरिव ॥
मिथो ऽवयविसांकर्यमिति भेदस्तयोर्द्वयोः ।
निरूपितानि करणान्येवं नवविधान्यपि ॥
व्यत्यासपाटकरणप्रबन्धेन सह स्फुटम् ।
निर्युक्तो ऽयं प्रबन्धः स्यात्तालस्य नियमो यतः ॥
य आदिताल इत्युक्त एकेन लघुना युतः ।
रासताल इति प्रोक्तः स एवात्रेति निर्णयः ॥
मेलापकस्य विरहात्त्रिधातुरिति कीर्तितः ।
स्वरादीनां षडङ्गानां करणेषु नवस्वपि ॥
पर्यायेण निविष्टत्वान्मेदिनीजातिमानयम् ।
अथोद्देशक्रमप्राप्तः सिंहलीलो निरूप्यते ॥
स्वरैः पाटैश्च बिरुदैस्तेन्नकैश्च क्रमेण च ।
विरच्यते सिंहलीलनाम्ना तालेन स स्मृतः ॥
प्रबन्धः सिंहलीलाख्यः सिंहलीले द्रुतास्त्रयः ।
आद्यन्तयोर्लघूपेतास्तत्र च स्वरपाटकैः ॥
उद्ग्राहं कल्पयेद्धातुं बिरुदैस्तेन्नकैर्ध्रुवम् ।
पदैः कुर्याद्यथाभोगं तेनायं स्यात्त्रिधातुकः ॥
निर्युक्तस्तालनियमादङ्गैः षड्भिः स्वरादिभिः ।
निबद्धत्वाद्भवत्येष मेदिनीजातिसंगतः ॥

तदेवं मेदिनीजातिप्रबन्धाः सप्त लक्षिताः ।
अथोद्देशक्रमप्राप्ता आनन्दिन्यादिसंगताः ॥
प्रबन्धाः सन्ति ये तत्र नानादेशेषु विश्रुताः ।
तत्रापि ये ऽत्र प्रसिद्धाः कतिचित्तान्ब्रुवे ऽधुना ॥
प्रसिद्धसंगीतविद्यासंप्रदायप्रवर्तकः ।
विद्यासिंहासनाध्यक्षः कल्पनाचतुराननः ॥
व्यासपाचार्य एवास्मत्पूर्वाचार्यो ऽतिविश्रुतः ।
तेन वाग्गेयकारेण कृतः श्रीवर्धनाभिधः ॥
जयकर्णाटधारेति प्रबन्धो लक्षणान्वितः ।
तल्लक्षणं तु संगीतरत्नाकर इतीरितम् ॥
श्रीवर्धनस्य बिरुदैः पाटैरपि पदैः स्वरैः ।
तालमानद्वयन्यासो निःशङ्केन प्रकीर्तितः ॥
इति श्रीवर्धनाख्यस्य लक्षणं समुदाहृतम् ।

अस्योदाहरणं लिख्यते । नाटरागः । मामापामा पाससनिनिपपनिपप-निपम गममापाप सससनिमा पासससपससरीससससा ससममममपा-ममम मरिससामसममरिसनिसा ममारिसारिसानिसा पमपससानिप-निपम गाममा पासा । अथ मध्यमाने सस्ससस्ससममगमपससा सससपपपममपपमरि ससससससाससपममपम००डलीइकअरअ ग००० डाआ तुर२-द्रु५ तोंगिण अंगिण थ३द्रु४ द्रि३ तों२ तोओंगिणणंगिणमप । पुनर्विलम्बमाने पा पाससस सासा वुशी पनि पससा सासा वुशि० मा मापामा प नीपपमपाप्पममामा रिसानि पामपससा इति बिरुदैः पाटैः, सरीसरिसममरिसनिसा मा मा मा पा पा सा सा सपा पमममारिसा रिसानीसासमापा । एतद्द्विगुणमाने ससरि सससस निपपनिमम मगमपमपसनिपममरिस मगमपप्पमपनिप्पपससा मपपमम-रिससनिप रिविवे ससानिपाममारिसा पमापासनीसा रिसारीममरिस-सनिपमरिसरि यरेणे इति ध्रुवः । अथाभोगः ममपपनिपममपममममरि सममरिसममरिसपममप सससरिगमपपानिपपमगम पपससप्पपसाञ्जप-ममरिसा । विलम्बे पनिपपममापाममापाममममा मामारिसारिसानीस पनिपमपसासासरिसा रिगामामारिसानिसा । मध्यमाने ससससममपपसनि-पमममरिससरिस मनिपमरिसा ममपपा । धातुत्रयान्वितत्वात्त्रिधातुः ।

तालानियमादनिर्युक्तः । तेन्नकाराभावादङ्गपञ्चकसहितः, आनन्दिनीजातिमान्, हरुषवरधेनुरे एरे जअयअ । एवमेव जयजयसंगीतागम अभिनवभरतमुनिरे इत्यादिर्गेयः ॥

इति श्रीराजाधिराजभोसलकुलतिलकतुलजामहाराजविरचिते

संगीतसारामृते प्रबन्धप्रकरणम्

द्वादशम्

## अथ तालप्रकरणम (१३)

नानामार्गैर्लयो यत्र यतीनां स्यात्कलानिधौ
तं दक्षिणं शिवं नौमि चित्रं वृत्तिमयं ध्रुवम ॥
तालस्तलप्रतिष्ठायामिति धातोर्घञि स्मृतः ।
गीतं वाद्यं तथा नृत्तं यतस्ताले प्रतिष्ठितम् ॥
कालो लघ्वादिमितया क्रियया संमितो मितिम् ।
गीतादेर्विदधत्तालः स च द्वेधा बुधैः स्मृतः ॥
मार्गदेशीगतत्वेन तत्राद्यस्य क्रिया द्विधा ।
निःशब्दा शब्दयुक्ता च निःशब्दा तु कलोच्यते ॥
स्यादावापो ऽथ निष्क्रामो विक्षेपश्च प्रवेशकः ।
निःशब्देति चतुर्धोक्ता सशब्दा च चतुर्विधा ॥
ध्रुवः शम्या तथा तालः संनिपात इतीरितः ।
पातः कला च सा ज्ञेया तासां लक्ष्माभिदध्महे ॥
आवापस्तत्र हस्तस्योत्तानस्याङ्गुलिकुञ्चनम् ।
निष्क्रामो ऽधस्तलस्य स्यादङ्गुलीनां प्रसारणम् ॥
क्षेपो दक्षिणपार्श्वे ऽस्योत्तानस्य प्रसृताङ्गुलेः ।
विक्षेपो ऽधस्तलस्यास्य प्रवेशो ऽङ्गुलिकुञ्चनम् ॥
ध्रुवो हस्तस्य पातः स्याच्छोटिकाशब्दपूर्वकः ।
शम्या दक्षिणहस्तस्य तालो वामकरस्य तु ॥
उभयोः संनिपातः स्यात्तासां मार्गवशान्मितिः ।
मार्गाः स्युश्चात्र चत्वारो ध्रुवश्चित्रश्च वार्तिकः ॥
दक्षिणश्चेति तत्र स्याद् ध्रुवके मात्रिका कला ।
शेषेषु द्वे चतस्रो ऽष्टौ क्रमान्मात्राः कला भवेत ॥
ध्रुवका सर्पिणी कृष्या पद्मिनी च विसर्जिता ।
विक्षिप्ताऽऽख्या पताका च मात्रा स्यात्पतिता ऽष्टमी ॥
सशब्दा ऽत्र ध्रुवा ज्ञेया सर्पिणी वामगामिनी ।
कृष्या दक्षिणतःपाता पद्मिनी स्यादधोगता ॥

विसर्जिता बहिर्याता विक्षिप्ता कुञ्चनात्मिका ।
पताका चोर्ध्वपतनात्पतिता करपातनात् ॥
ध्रुवपाते प्रयोज्यास्ता नाद्यापादौ कदाचन ।
ध्रुवकापतिते चित्रे वार्तिके त्वादिमे उभे ॥
अन्त्ये द्वे च प्रयोक्तव्ये क्रमादष्टौ च दक्षिणे ।
पञ्चलघ्वक्षरोच्चारमिता मात्रेह कथ्यते ॥
अनया मात्रया ऽत्र स्याल्लघुगुर्वादिकल्पना ।
चतुरश्रस्तथा त्र्यश्र इति तालो द्विधा मतः ॥
चच्चत्पुटश्चाचपुट इति नाम तयोः क्रमात् ।
यथाऽक्षरश्च द्विकलश्चतुष्कल इति त्रिधा ॥
प्रत्येकं तौ नामगतैर्गलैस्तत्र यथाऽक्षरम् ।
अयमेककलश्चच्चत्पुटे त्वन्त्यं प्लुतं विदुः ॥

SSIS इति यथाऽक्षरश्चच्चत्पुटः ; SIIS इति यथाऽक्षरश्चाचपुटः ।

गुरुः कला ऽत्र द्विकले ऽष्टावाद्ये ऽन्यत्र षट् कलाः ।

SS SS S SSS इति द्विकलश्चच्चत्पुटः ; SS S S SS इति द्विकलश्चाचपुटः ।

चतुष्कलौ तौ द्विगुणौ

SSSS SSSS SS SSSSSS इति चतुष्कलश्चच्चत्पुटः ; SSSS SS SS SSSS इति चतुष्कलश्चाचपुटः ।

द्विकले द्विकलो मतः ॥

पादभागः कलानां तु चतुष्केण चतुष्कले ।
पादभागैश्चतुर्भिस्तैर्मात्रा स्यान्मद्रकादिषु ॥
षट्पितापुत्रकस्त्र्यश्रभेदः सो ऽपि त्रिधा मतः ।
यथाऽक्षरे विशेषो ऽत्र प्लुतमाद्यन्तयोर्भवेत् ॥

SISSIS इति यथाक्षरः षट्पितापुत्रकः ।

द्विकले द्वादश कलाः

SSS S SS SS S SSS इति द्विकलः षट्पितापुत्रकः ।

द्विगुणास्तु चतुष्कले ॥

SSSSSS SS SSSS SSSS SS SSSSSS इति चतुष्कलः षट्पितापुत्रकः ।

उत्तरः पञ्चपाणिश्च तस्य संज्ञाद्वयं परम् ।
उद्घट्टो ऽपि त्र्यश्रभेदः स प्रस्तारे यथाऽक्षरः ॥

संपक्केष्टाको ऽपि भेदः षट्पितापुत्रकस्य सः ।
तद्वद्यथाऽक्षरः कार्यः प्लुतमाद्यन्तयोर्भवेत् ॥
एतौ स्वयोनिवत्स्यातां द्विकलौ च चतुष्कलौ ॥
अन्यद्भेदत्रयं चाचपुटे त्वस्ति चतुष्कलात् ।
द्विगुणद्विगुणत्वेन षण्णवत्यवधि क्रमात् ॥

ऽऽऽ इति यथाऽक्षर उद्घट्टः ; ऽऽ ऽऽ ऽऽ इति द्विकल उद्घट्टः । ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ इति चतुष्कल उद्घट्टः ; ऽऽऽऽऽ इति यथाऽक्षरः संपक्केष्टाकः ; ऽऽऽ ऽऽ ऽऽ ऽऽ ऽऽऽ इति द्विकलः संपक्केष्टाकः ; ऽऽऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽऽऽ इति चतुष्कलः संपक्केष्टाकः ।

ऽऽऽऽऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽऽऽऽऽ इत्येको भेदः । ऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽ ऽऽऽऽऽऽऽऽ ऽऽऽऽऽऽऽऽ ऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽ इति द्वितीयो भेदः । ऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽ ऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽ ऽऽऽऽऽऽऽऽ-ऽऽऽऽऽऽऽऽ ऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽ इति तृतीयो भेदः ।

तेषां पातकलायोगं श्रेयसे व्याहरामहे ।
आद्यैर्वर्णैः पातकला निःशङ्कः पर्यभाषत ॥
चच्चत्पुटे त्वेककले संशताशं यथाक्रमम् ।

ऽ ऽ । ऽ
सं श ता श

यद्वा शताशता तालशम्यं वा द्विर्भवेदिह ॥

ऽ ऽ । ऽ ऽ ऽ । ऽ
श ता श ता ता श ता श

॥ इत्येककलचच्चत्पुटकलाविधिः ॥

---

आसारितादौ शम्याऽऽदिस्तालादिः पाणिकादिषु ।
अन्त्यं भेदद्वयं चाचपुटे ऽपीति मुनेर्मतम् ॥

ऽ । । ऽ ऽ । । ऽ
श ता श ता ता श ता श

॥ इत्येककलचाचपुटकलाविधिः ॥

उत्तरे सं ततस्ताल: शतालौ द्विरनन्तरम् ।

ऽ । ऽ ऽ । ऽ

सं ता श ता श ता

॥ इत्येककलषट्पितापुत्रककलाविधि: ॥

---

निशौ निताशप्रनिसं द्विकले युग्मके मता: ॥

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ

नि श नि ता श प्र नि सं

॥ इति द्विकलचच्चत्पुटकलाविधि: ॥

---

निशौ ताशौ निसमिति ज्ञेयाश्चाचपुटे क्रमात् ।

ऽ ऽ ऽ ऽ ऽ ऽ

नि श ता श नि सं

॥ इति द्विकलचाचपुटकलाविधि: ॥

---

निप्रताशनितानिशताप्रनिसं तथोत्तरे ॥

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ

नि प्र ता श नि ता नि श ता प्र नि सं

॥ इति द्विकलषट्पितापुत्रककलाविधि: ॥

---

आदावधिक आवापे क्षिप्ते विक्षिप्तके ऽन्तरा ।

द्विकले पादभाग: स्यात्पादभागश्चतुष्कले ॥

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ

आ नि वि श आ नि वि ता आ श वि प्र आ नि वि सं

॥ इति चतुष्कलचच्चत्पुटकलाविधि: ॥

---

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आ नि वि श आ ता वि श आ नि वि सं

॥ इति चतुष्कलचाचपुटकलाविधिः ॥

---

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आ नि वि प्र आ ता वि श आ नि वि ता आ नि वि श आ ता वि प्र आ नि वि सं

॥ इति चतुष्कलषट्पितापुत्रककलाविधिः ॥

---

प्रथमे पादभागे स्यात्कला ऽङ्गुल्या कनिष्ठया ।
तया ऽनामिकया ऽन्यत्र ताभ्यां मध्यमया तथा ॥
तृतीये स्याच्चतसृभिस्तुर्ये चाचपुटस्य तु ।
ओजस्य पादभागे तु कला मध्याङ्गुलीं विना ॥
पञ्चपाणेः कनिष्ठाऽऽदिचतुष्केण कनिष्ठया ।
तर्जन्या च पृथक्पादभागषट्के क्रमात्कलाः ॥
आवापादिः प्रयोक्तव्यो भाविपातस्य पाणिना ।
पातयुक्तेपादभागे नाङ्गुल्या क्रियते कला ॥
उद्घट्टके तु निष्क्रामं शम्याद्वंद्वं च योजयेत् ।

ऽ ऽ ऽ
नि श श

॥ इत्येककलोद्घट्टकलाविधिः ॥

---

संपक्वेष्टाकस्य कलाः षट्पितापुत्रकेरिताः ।
संनिपातस्तु नास्त्यत्र योनिबद्द्विकलाऽऽदिके ॥

ऽ ऽ ऽ ऽ ऽ
ता श ता श ता

॥ इत्येककलसंपक्वेष्टाकलाविधिः ॥

---

भेदद्वये ऽस्योद्घट्टाख्यतालस्य तु कलाविधिः ।

ऽ ऽ  ऽ ऽ  ऽ ऽ
नि श  ता श  नि सं

॥ इति द्विकलोद्घट्टकलाविधिः ॥

---

ऽ ऽ ऽ ऽ  ऽ ऽ ऽ ऽ  ऽ ऽ ऽ ऽ
आ नि वि श  आ ता वि श  आ नि वि श

॥ इति चतुष्कलोद्घट्टकलाविधिः ॥

---

ऽ ऽ ऽ  ऽ ऽ  ऽ ऽ  ऽ ऽ  ऽ ऽ ऽ
नि प्र ता  श नि  ता नि  श ता  प्र वि सं

॥ इति द्विकलसंपक्वेष्टाककलाविधिः ॥

---

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ  ऽ ऽ ऽ ऽ  ऽ ऽ ऽ ऽ
आ नि वि प्र आ ता वि श आ नि  वि ता आ नि  वि श आ ता
ऽ ऽ ऽ ऽ ऽ ऽ
वि प्र आ नि वि सं

॥ इति चतुष्कलसंपक्वेष्टाककलाविधिः ॥

---

गान्धर्वमार्गकुशलः कांस्यतालधरो ऽपरः ॥
गातुः सहायः कर्तव्यः प्रमादाविनिवृत्तये ।
युग्मस्य ये त्रयो भेदाः षड्युग्मस्य कीर्तिताः ॥
तेषामन्योऽन्यसंसर्गात्संकीर्णा बहवो मताः ।
अन्ये पञ्चैव संकीर्णान्गान्धर्वे ऽभिदधुर्बुधाः ॥
पञ्च सप्त नवापि स्युर्दशैकादश तत्कलाः ।
तालाश्चत्वार इत्यन्ये चतुर्दशकलाऽऽदिकाः ॥
चचत्पुटादिभेदाः स्युः सन्ति खण्डाभिधाः परे ।
देशीतालप्रपञ्चेन तानपि व्याहरामहे ॥

आवृत्तिः पदभागादेः परिवर्तनमिष्यते ।
विश्रान्तियुक्तया ताले क्रियया मानमुच्यते ॥
क्रियाऽनन्तरविश्रान्तिर्लयः स त्रिविधो मतः ।
द्रुतो मध्यो विलम्बश्च द्रुतः शीघ्रतमो मतः ॥
द्विगुणद्विगुणौ ज्ञेयौ तस्मान्मध्यविलम्बितौ ।
मार्गभेदाच्चिरक्षिप्रमध्यभावाद्यनेकधा ॥
लयो ऽक्षरे पदे वाक्ये यो ऽसौ नात्रोपयुज्यते ।
लयप्रवृत्तिनियमो यतिरित्यभिधीयते ॥
समा स्रोतोगता चान्या गोपुच्छा त्रिविधेति सा ।
आदिमध्यावसानेषु लयैकत्वे समा त्रिधा ॥
लयत्रैधादादिमध्यावसानेषु यथाक्रमम् ।
प्लुतमध्यद्रुतलया यदा स्रोतोगता मता ॥
अन्या मध्यविलम्बा स्यान्मध्यद्रुतवर्ता परा ।
द्रुतमध्यविलम्बैः स्याद्गोपुच्छा द्रुतमध्यभाक् ॥
द्वितीया ऽन्या भवेन्मध्यविलम्बितलयान्विता ।
समो ऽतीतो ऽनागतश्च ग्रहस्ताले त्रिधा मतः ॥
गीतादिसमकालस्तु समपाणिः समग्रहः ।
सो ऽवपाणिरतीतः स्याद्यो गीतादौ प्रवर्तते ॥
अनागतः प्राक्प्रवृत्तग्रहः सोपरिपाणिकः ।
लयाः क्रमात्समादौ स्युर्मध्यद्रुतविलम्बिताः ॥

॥ इति मार्गतालाः ॥

श्रीकीर्तिविजयानन्दं पार्वतीलोचनोत्सवम् ।
राजचूडामणिं नत्वा तालं देशीगतं ब्रुवे ॥
देशीतालस्तु लघ्वादिमितया क्रियया युतः ।
यथाशोभं कांस्यतालध्वननादिकया मतः ॥
अर्धमात्रा द्रुता मात्रात्रितयं प्लुत उच्यते ।
द्रुतादिरचनाभेदात्तालभेदो ऽप्यनेकधा ॥
तालानामधुना तेषामुद्देशं संगिरामहे ।
आदितालो द्वितीयश्च तृतीयो ऽथ चतुर्थकः ॥

पञ्चमो निःशङ्कलीलो दर्पणः सिंहविक्रमः ।
रतिलीलः सिंहलीलः कंदर्पो वीरविक्रमः ॥
रङ्गः श्रीरङ्गचच्चर्यौ प्रत्यङ्गो यतिलग्नकः ।
गजलीलो हंसलीलो वर्णभिन्नस्त्रिभिन्नकः ॥
राजचूडामणी रङ्गोद्योतो रङ्गप्रदीपकः ।
राजतालो वर्णतालः सिंहविक्रीडितो जयः ॥
वनमाली हंसनादः सिंहनादः कुडुक्ककः ।
तुरङ्गलीलः शरभलीलः स्यात्सिंहनन्दनः ॥
त्रिभङ्गी रङ्गाभरणो मण्ठकः कोकिलाप्रियः ।
निःसारुको राजविद्याधरश्च जयमङ्गलः ॥
मल्लिकाऽऽमोदविजयानन्दौ क्रीडाजयश्रियौ ।
मकरन्दः कीर्त्तितालः श्रीकीर्त्तिः प्रतितालकः ॥
विजयो बिन्दुमाली च समनन्दनमण्ठिकाः ।
दीपकोद्दीक्षणौ ढेङ्की विषमो वर्णमण्ठिका ॥
अभिनन्दो ऽनङ्गनान्दीमल्लकङ्कालकन्दुकाः ।
एकताली च कुमुदश्चतुस्ताली च डोम्बुली ॥
अभङ्गो रायवङ्कोलो वसन्तो लघुशेखरः ।
प्रतापशेखरो झम्पा गजझम्पश्चतुर्मुखः ॥
मदनः प्रतिमण्ठश्च पार्वतीलोचनो रतिः ।
लीलाकरणयत्याख्यौ ललितो गारुगिस्तथा ॥
राजनारायणाख्यश्च लक्ष्मीशो ललितप्रियः ।
श्रीनन्दनश्च जनको वर्धनो रागवर्धनः ॥
षट्तालश्चान्तरक्रीडा हंसोत्सवविलोकिताः ।
गजो वर्णयतिः सिंहः करुणः सारसस्तथा ॥
चण्डतालश्चन्द्रकलालयस्कन्दाडुतालिकाः ।
धत्ता द्वंद्वमुकुन्दौ च कुविन्दश्च कलध्वनिः ॥
गौरी सरस्वतीकण्ठाभरणो भग्नसंज्ञकः ।
तालो राजमृगाङ्कश्च राजमार्तण्डसंज्ञकः ॥
निःशङ्कः शार्ङ्गदेवश्चेत्येते सोढलसूनुना ।
देशीतालाः समादिष्टा विंशत्यभ्यधिकं शतम् ॥

गुर्वाद्याश्चतुरश्रादेः खण्डयित्वा निवेशिताः ।
यद्वा लघ्वादिखण्डानामाधिक्यमिह दृश्यते ॥
तेनैषां खण्डतालत्वमभाषन्त पुरातनाः ।
द्रुताद्याद्यक्षरैर्ज्ञेयं सन्ति संज्ञाऽन्तराण्यपि ॥
अर्धमात्रं तथा व्योम व्यञ्जनं बिन्दुकं द्रुते ।
लघुनि व्यापकं ह्रस्वं मात्रिकं सरलं तथा ॥
द्विमात्रं च कला वक्रं दीर्घं गुरुणि कीर्तितम् ।
प्लुते त्र्यङ्गं त्रिमात्रं च दीप्तं सामोद्भवं तथा ॥
द्रुते शंभुर्लघौ देवी गुरौ गौरीयुतः शिवः ।
प्लुते त्रयो विरिञ्च्याद्या देवता मुनिभिः स्मृताः ॥
द्रुते बिन्दुर्विरामान्ते तूक्ता मात्रायुता लिपिः ।
प्लुते मात्रायुतो वक्रो लिपौ श्रीशार्ङ्गिणोदितः ॥
तालानां लक्षणं वक्ष्ये तेषां सूरिमताश्रितम् ।
लघ्वादितालो लोके ऽसौ रासः, द्वौ लौ द्वितीयकः ।
द्रुताद् द्रुतौ विरामान्तौ तृतीयः स्यात्, चतुर्थकः ।
लघुद्वयं द्रुतश्चैकः, पञ्चमस्तु द्रुतद्वयम ॥
ताले निःशङ्कलीलाख्ये प्लुतौ द्वौ गद्वयं लघुः ।
दर्पणे दद्वयं गश्च, सिंहविक्रमसंज्ञकः ॥
गत्रयं लः पलगपाः, रतिलीले लघू गुरू ॥
लघ्वन्ते दत्रयं सिंहलीलः, द्वौ यगणस्तथा ।
कंदर्पतालस्तस्यैव पर्यायः स्यात्परिक्रमः ॥
लघुर्द्रुतद्वयं चान्ते गुरुः स्याद्वीरविक्रमः ।
रङ्गश्चतुर्द्रुती गश्च, श्रीरङ्गः सगणो लपौ ॥
विरामान्तद्रुतद्वंद्वान्यष्टौ लघु च चच्चरी ।
प्रत्यङ्गो मगणो लौ द्वौ, यतिलग्नो द्रुतो लघुः ॥
गजलीलो विरामान्तमुक्तं लघुचतुष्टयम् ।
हंसलीलो विरामान्तं लघुद्वयमुदाहृतम् ॥
वर्णभिन्नो द्रुतौ लो गः, त्रिभिन्नो लगुरुप्लुताः ।
राजचूडामणिर्द्वौ द्वौ नगणश्च द्रुतौ लगौ ॥
मगणो लप्लुतौ रङ्गोद्योतः, रङ्गप्रदीपकः ।

तो गप्लुतौ राजताले गपौ द्वौ च गलौ प्लुतः ॥
ऽयश्रो मिश्रो द्विधा वर्णस्ऽयश्रे लौ द्वौ लघुद्वयम् ।
मिश्रो द्रुतचतुष्काः स्युर्विरामान्तास्त्रयः पृथक् ॥
ततः पगौ द्वौ गलौ गः, चतुरश्रोऽपि दृश्यते ।
गलौ द्रुतौ गुरुश्चेति, सिंहविक्रीडितः पुनः ॥
लपौ गपौ पगौ लाद्गः पलौ पश्च, जयः पुनः ।
जो लघुर्द्वौ द्रुतौ पश्च, वनमाली चतुर्द्रुती ॥
लघुर्द्वौ द्वौ गुरुरिति, लप्लुतौ द्वौ द्रुतौ प्लुतः ।
हंसनादः, सिंहनादो यगणश्च लघुर्गुरुः ॥
कुडुक्को द्वौ द्रुतौ लौ द्वौ, विरामान्तद्रुतद्वयात् ।
द्रुतौ तुरङ्गलीलः स्याद्, भवेच्छरभलीलकः ॥
लौ द्वौ चतुर्द्रुती द्वौ लौ, सिंहनन्दनकः पुनः ।
तपौ लगौ द्रुतौ गौ लः पलपा गो लघू ततः ॥
चत्वारो लघवोऽशब्दाः, त्रिभङ्गिः सगगाद् गुरुः ।
रङ्गाभरणताले ताद्गप्लुतौ, मण्ठके पुनः ॥
साश्चतुर्लघु निःशब्दम्, यद्वा भाद्गावशब्दकौ ।
भाश्चतुर्लघु निःशब्दं भवेन्मुद्रितमण्ठके ॥
मण्ठो नजौ लघुर्यद्वा, प्रोक्ताः षडपरा भिदाः ।
मण्ठरूपकवेलायाम्, कोकिलाप्रियनाम्नि तु ॥
गलपाः स्युः, विरामान्तौ लघू निःसारुको मतः ।
लघुर्गुरुर्द्रुतद्वंद्वं राजविद्याधरो भवेत् ॥
सगणद्वितयं यत्र स तालो जयमङ्गलः ।
मल्लिकाऽऽमोदताले तु लौ द्वौ द्रुतचतुष्टयम् ॥
विजयानन्दसंज्ञे तु लघुद्वंद्वं गुरुत्रयम् ।
क्रीडा द्रुतौ विरामान्तौ चण्डानिःसारुकश्च सः ॥
जयश्री रगणाल्लो गः, द्वौ लौ लो मकरन्दकः ।
लपौ गलौ प्लुतः कीर्त्तिः, श्रीकीर्त्तिर्द्वौ लघू गुरू ॥
लो द्रुतौ प्रतितालः स्यात्, विजयः पगपा लघुः ।
गुर्वोर्मध्ये तु चत्वारो बिन्दवो बिन्दुमालिनि ॥
समो लौ द्वौ विरामान्तौ, लघुर्द्वौ पश्च नन्दनः ।

गुरुद्रुतप्लुताः प्रोक्ता मण्ठिका, अन्यैस्तु लद्वयम् ।
विरामादिद्रुतौ द्वौ च मण्ठिका परिकीर्तिता ।
दीपको दलगा द्विर्द्विः, लौ द्वौ गुरुरुदीक्षणः ॥
रगणो ढेङ्किका कैश्चिदेष प्रोक्तस्तु योजनः ।
द्विश्चत्वारो विरामान्ता द्रुतास्तु विषमे मताः ॥
द्वौ लौ द्वौ दौ लघुर्दौ द्वौ कीर्तिता वर्णमण्ठिका ।
अभिनन्दो लघुद्वंद्वं द्रुतयुग्मं गुरुस्तथा ॥
लप्लुतौ सगणो ऽनङ्गः, नान्दी लो दौ लघू गुरू ।
मल्लतालो विरामान्तद्विबिन्द्वन्तं चतुर्लघु ॥
उक्तश्चतुर्धा कङ्कालः पूर्णः खण्डः समो ऽसमः ।
चतुर्द्रुती गलौ पूर्णः, खण्डो दौ द्वौ गुरुद्वयम् ॥
समो गुरू द्वौ लघ्वन्तौ, विषमो लाद् गुरुद्वयम् ।
कन्दुको लौ च सगणः, द्रुतेन त्वेकतालिका ॥
कुमुदो लाद् द्रुतौ लौ गश्च, अन्येषां लश्चतुर्द्रुती ।
अन्ते गुरुश्च कुमुदः, चतुस्तालो गुरोः परे ॥
त्रयो द्रुताः, डोम्बुली तु द्विर्लघु स्याद्विरामवत् ।
अभङ्गो लप्लुतौ, रायवङ्कोलो रगणाद् द्रुतौ ॥
वसन्तो न्मौ, विरामान्तलघुना लघुशेखरः ।
प्रतापशेखरो दीप्ताद्विरामान्तं द्रुतद्वयम् ॥
झम्पातालो विरामान्तं द्रुतद्वंद्वं लघुस्तथा ।
गजझम्पो गुरोरूर्ध्वं विरामान्तं द्रुतत्रयम् ॥
चतुर्मुखो जप्लुताभ्यां स एवोन्मात्रको मतः ।
दद्वयं गश्च मदनः, सो भो वा प्रतिमण्ठकः ॥
कोल्लको ऽन्यैरयं प्रोक्तः, पार्वतीलोचने पुनः ।
मलपा द्वौ गुरू दौ द्वौ, रतितालो लघुर्गुरुः ॥
लीला दलौ पः, करणयतौ द्रुतचतुष्टयम् ।
ललितो द्वौ द्रुतौ लो गः, गारुगिस्तु चतुर्द्रुती ॥
विरामान्ता बुधैरुक्ता, राजनारायणः पुनः ।
द्रुतौ द्वौ जगणो वक्रः, लक्ष्मीशे तु द्रुतद्वयम् ॥
विरामान्तं लप्लुतौ च, तालस्तु ललितप्रियः ।

ऊर्ध्वं लघुभ्यां रगणः, स्यातां श्रीनन्दने भपौ ॥
जनको नयसा वक्रः, वर्धनो द्वौ द्रुतौ लपौ ।
विरामान्तौ द्रुतौ बिन्दुस्त्रिमात्रो रागवर्धनः ॥
द्रुतैः षड्भिस्तु षट्तालः, अन्तरक्रीडा तु कथ्यते ।
द्रुतत्रयं विरामान्तम्, हंसे सविरती लघू ॥
लघुप्लुतावुत्सवः स्यात्, गो दौ दीप्तो विलोकिते ।
गजश्चतुर्लो धारा ऽसौ, लौ दौ वर्णयतिर्भवेत् ॥
सिंहे लदौ लत्रयं च, गुरुणा करुणो मतः ।
लघुर्द्रुतानां त्रितयं लघू द्वौ सारसः स्मृतः ॥
द्रुतत्रयं लघुद्वंद्वं चण्डताले बभाषिरे ।
मगणश्च त्रयो दीप्ता लघुश्चन्द्रकलाऽभिधे ॥
गलौ प्लुतत्रयं वक्रः प्लुतो बिन्दुत्रयं लये ।
रो द्रुतौ द्वौ गुरू स्कन्दः, अड्डताली दो लघुद्वयम् ॥
इममेवोचिरे तालं केचित्त्रिपुटसंज्ञया ।
द्वौ लौ द्वौ दौ लगौ घत्ता, द्वंद्वः सतगणौ प्लुतः ॥
मुकुन्दे तु लघोर्बिन्दुचतुष्टयमथो गुरुः ।
कुविन्दके लघुर्बिन्दुद्वयं गुरुरथ प्लुतः ॥
कलध्वनिर्लघुद्वंद्वं गुरुर्लघुरतः प्लुतः ।
पञ्चभिर्लघुभिर्गौरी, द्वौ गुरू द्वौ लघुद्रुतौ ॥
ताले सरस्वतीकण्ठाभरणे शार्ङ्गिसंमतौ ।
भग्नताले चतुर्बिन्दु नगणश्च विरामवान् ॥
ताले राजमृगाङ्के तु द्रुतौ लघुरथो गुरुः ।
गुरुर्लघुर्द्रुतस्ताले राजमार्तण्डसंज्ञके ॥
निःशङ्कसंज्ञके ताले लो गुरू पो गुरू गलौ ।
शार्ङ्गदेवे द्रुतद्वंद्वं गप्लुतौ गद्वयं लघुः ॥
॥ इति विंशत्युत्तरं शतं देशीतालाः ॥
अन्ये ऽपि सन्ति भूयांसस्तालास्ते लक्ष्मवर्त्मनि ।
प्रसिद्धिविधुरत्वेन शास्त्रे ऽस्मिन्न प्रदर्शिताः ॥

इति श्रीराजाधिराजभोसलकुलतिलकतुलजामहाराजविरचिते
संगीतसारामृते तालप्रकरणम्
त्रयोदशम्

## अथ प्रकीर्णकप्रकरणम् (१४)

वक्ति श्रीतुलजेन्द्रो ऽथ प्रकीर्णकमनाकुलम् ।
नादभेदाश्रयं सर्वगानोपकरणत्वतः ॥
नादभेदास्तद्गुणाश्च तद्दोषा गायनास्तथा ।
गायनस्य गुणा दोषाः शारीरं तद्गुणास्तथा ॥
तद्दोषा गमकस्थायालप्तिबृन्दानि च क्रमात् ।
निरूप्यन्ते ऽत्र संगीतसारामृतकृतौ स्फुटम् ॥
भवेन्नादश्चतुर्भेदः खाउलो नारहाटकः ।
जोम्बको मिश्रकश्चेति तेषां लक्षणमुच्यते ॥
कफजः खाउलः स्निग्धमधुरः सौकुमार्ययुक् ।
त्रिस्थानघनगम्भीरलीनः पित्तोद्भवो ध्वनिः ॥
नाराटे जोम्बकस्तु स्यादन्तर्निःसारतायुतः ।
एतत्संमिश्रणान्मिश्र इत्युक्तः सांनिपातिकः ॥
द्वयोर्द्वयोस्त्रयाणां च संसर्गात्स चतुर्विधः ।
युक्तौ खाउलनाराटौ तथा खाउलजोम्बुकौ ॥
नाराटजोम्बुकौ युक्तौ ते त्रयो मिलिता इति ।
द्विमिश्रास्त्रय इत्युक्तास्त्रिमिश्रस्तु तुरीयकः ॥
मिश्रभेदा इति प्रोक्ता निर्दोषत्रयमिश्रणात् ।
पित्तजो नाराटकः स्याद्वातजो जोम्बुको मतः ॥
एतत्संमिश्रणान्मिश्रश्चतुर्थः स चतुर्विधः ।
मिश्रभेदा इति प्रोक्ता निर्दोषास्त्रयमिश्रणात् ॥
उत्तमोत्तम इत्युक्तः सुराणामिव शंकरः ।
खाउलो नाराटयुक्त उत्तमः परिकीर्तितः ॥
मध्यमो जोम्बुयुक्तः स्याज्जोम्बो नाराटसंयुतः ।
ध्वनीनामधमः प्रोक्तः श्रीमत्तुलजभूभुजा ॥
निःसारतारूक्षताभ्यां युक्तः सर्वाधमो मतः ।
भवन्ति भेदा बहवो नानातद्गुणमिश्रणात् ॥

॥ इति शब्दभेदलक्षणम् ॥

गुणाश्च संगीतरत्नाकरे—

मृष्टो मधुरचेहालत्रिस्थानकसुखावहाः ।
प्रचुरः कोमलो गाढः श्रावकः करुणो घनः ॥
स्निग्धः श्लक्ष्णो रक्तियुक्तश्छविमानिति सूरिभिः ।
गुणैरेभिः पञ्चदशभेदः शब्दो निगद्यते ॥ इति ॥

एतद्व्याख्यानमपि तत्रैव कृतम्—

श्रोत्रनिर्वापको मृष्टस्त्रिषु स्थानेष्वपि स्वरः ।
मधुरः कीर्तितस्तारे प्रौढो मधुररञ्जकः ॥
नातिस्थूलो नातिकृशः स्निग्धश्चेहालको घनः ।
आकण्ठकुण्ठनं स स्यात्पुंसां स्त्रीणां तु सर्वदा ॥
त्रिषु स्थानेष्वेकरूपश्छविरक्त्यादिभिर्गुणैः ।
स्त्रिस्थानो मनसो यस्तु सुखदः स सुखावहः ॥
श्रीशंकरप्रियेणोक्तः प्रचुरस्थूलतायुतः ।
कोमलो ऽन्वर्थनामैव कोकिलध्वनिवन्मतः ॥
गाढस्तु प्रबलो दूरश्रवणाच्छ्रावको मतः ।
करुणः श्रोतृचित्तस्य करुणारसदीपकः ॥
दूरश्रवणयोग्यस्तु घनो ऽन्तःसारतायुतः ।
अरूक्षो दूरसंश्राव्यो बुधैः स्निग्धो ध्वनिः स्मृतः ॥
श्लक्ष्णस्तु तैलधारावदच्छिद्रो धीरसंमतः ।
अनुरक्तेस्तु जनको रक्तिमानभिधीयते ॥
गातुर्विमलकण्ठत्वाद्यः प्राज्ञैरुपलक्ष्यते ।
उज्ज्वलो ऽयमिति प्रोक्तश्छविमानिति स ध्वनिः ॥

॥ इति शब्दगुणाः ॥

---

नानाविधगाननिर्वर्तकनादे दोषाश्च भारतीय उक्ताः—

रूक्षस्फुटितनिःसारकाकोलीकेटिकेणयः ।
कृशो भग्न इति प्रोक्ता दुष्टस्याष्टौ भिदा ध्वनेः ॥
रूक्षः स्निग्धत्वनिर्मुक्तः स्फुटितो ऽन्वर्थनामकः ।
एरण्डकाण्डनिःसारो निःसार इति कीर्तितः ॥

काकोलिकाऽऽख्यः काकोलकुलनिर्घोषनिष्ठुरः ।
स्थानत्रयाप्राप्तियुक्तो निर्गुणः केटिरुच्यते ॥
कृच्छ्रोन्मीलन्मन्द्रतारः केणिरित्यभिधीयते ।
अतिसूक्ष्मः कृशो भग्नः खरोष्ट्रध्वनिरीरितः ॥
॥ इति नानाविधनादनिर्वर्तकनाददोषाः ॥

---

शास्त्रोक्तगुणसंपन्नः सर्वदोषविवर्जितः ।
गायनः श्रेष्ठ इत्युक्तो मुनिभिर्भरतादिभिः ॥
गुणदोषादिकं तस्य भारतीये यदीरितम् ।
तदेव लिख्यते ऽत्रापि तस्य प्रामाण्यसिद्धये ॥
हृद्यशब्दः सुशारीरो ग्रहमोक्षविचक्षणः ।
रागरागाङ्गभाषाऽङ्गक्रियाऽङ्गोपाङ्गकोविदः ॥
प्रबन्धगाननिष्णातो विविधालप्तितत्त्ववित् ।
सर्वस्थानोत्थगमकेष्वनायासो ऽस्खलद्गतिः ॥
आयत्तकण्ठस्तालज्ञः सावधानो जितश्रमः ।
शुद्धच्छायालगाभिज्ञः सर्वकाकुविशेषवित् ॥
अपायस्थायसंचारः सर्वदोषविवर्जितः ।
क्रियापरो युक्तलयः सुघटो धारणान्वितः ।
स्फूर्जन्निर्जवनो हारी रहःकृद्भजनोद्धुरः ।
सुसंप्रदायो गीतज्ञैर्गीयते गायनाग्रणीः ॥
गुणैः कतिपयैर्हीनो निर्दोषो मध्यमो मतः ।
महामाहेश्वरेणोक्तः सदोषो गायनो ऽधमः ॥
॥ इत्युत्तममध्यमाधमगायनविशेषाः ॥

---

शिक्षाकारो ऽनुकारश्च रसिको रञ्जकस्तथा ।
भावकश्चेति गीतज्ञाः पञ्चधा गायनं जगुः ॥
अन्यूनशिक्षणे दक्षः शिक्षाकारो मतः सताम् ।
अनुकार इति प्रोक्तः परभङ्ग्यनुकारकः ॥

रसाविष्टस्तु रसिको रञ्जकः श्रोतृरञ्जकः ।
गीतस्यातिशयाधानाद्भावकः परिकीर्तितः ॥
॥ इति पञ्चविधा गायनाः ॥

---

एकलो यमलो वृन्दगायनश्चेति ते त्रिधा ।
एक एव तु यो गायेदसावेकलगायनः ॥
सद्वितीयो यमलकः सवृन्दो वृन्दगायनः ।
रूपयौवनशालिन्यो गायन्यो गातृवन्मताः ॥
माधुर्यधुर्यध्वनयश्चतुराश्चतुरप्रियाः ।
गुणा गायनगायन्योर्दोषाश्चापि समासतः ॥

अथ दोषाः—

संदष्टोद्घुष्टशूत्कारिभीतशङ्कितकम्पिताः ।
कराली विकलः काकी वितालकरभोद्भडाः ॥
झोम्बकस्तुम्बकी वक्री प्रसारी विनिमीलकः ।
विरसापस्वराऽव्यक्तस्थानभ्रष्टाऽव्यवस्थिताः ॥
मिश्रको ऽनवधानश्च तथा ऽन्यः सानुनासिकः ।
पञ्चविंशतिरित्येते निन्दिता गायना मताः ॥
संदश्य रसनां गायन्संदष्टः परिकीर्तितः ।
उद्घुष्टो विरसोद्घोषः शूत्कारी शूत्कृतैर्मुहुः ॥
भीतो भयान्वितो गाता त्वरया शङ्कितो मतः ।
कम्पितः कम्पनाज्ज्ञेयः स्वभावाद् गात्रशब्दयोः ॥
कराली गदितः साङ्कः करालोद्घाटिताननः ।
विकलः स तु यो गायेत्स्वरान्न्यूनाधिकश्रुतीन् ॥
काकक्रूररवः काकी वितालस्तालविच्युतः ।
दधानः कंधरामूर्ध्वां करभो ऽभिहितो बुधैः ॥
छागवद्वदनं कुर्वन्नुद्भडो ऽधमगायनः ।
सिरालभालवदनग्रीवो गाता तु झोम्बकः ॥
तुम्बकी तुम्बकाकारफुल्लगल्लस्तु गायनः ।
वक्री वक्रीकृतगलो गायन्धीरैरुदीरितः ॥

प्रसारी गीयते तज्ज्ञैर्गाने गात्रप्रसारणात् ।
निमीलको मतो गायन्निमीलितविलोचनः ॥
विरसो नीरसो वर्ज्यस्वरगानादपस्वरः ।
गद्गद्ध्वनिरव्यक्तवर्णस्त्वव्यक्त उच्यते ॥
स्थानभ्रष्टस्तु यः प्राप्तुमशक्तः स्थानकत्रयम् ।
अव्यवस्थित इत्युक्तः स्थानकैरव्यवस्थितैः ॥
शुद्धच्छायालगौ रागौ मिश्रयन्मिश्रको मतः ।
इतरेषां च रागाणां मिश्रको भूरिमिश्रणात् ॥
स्थायादिष्ववधानेन निर्मुक्तो ऽनवधानकः ।
गेयं नासिकया गायन्गीयते सानुनासिकः ॥

॥ इति नानाविधगाननिर्वर्तकगायनदोषाः ॥

---

अथ प्रसङ्गाद्वाग्गेयकारलक्षणमुच्यते—

गेयांशमात्रं तु कुर्वन्गायनो ऽयं प्रकीर्तितः ।
वाचं गेयं च कुर्वन्वाग्गेयकार इतीर्यते ॥
असावुभयकारश्च बयकारश्च कीर्त्यते ।
इतीयं बयकाराख्या सिद्धा भाण्डीरभाषया ॥
भारतीयादिशास्त्रे वाग्गेयकारादिलक्षणम् ।
यद्यद्गुणयुतं प्रोक्तं तदेवात्र निरूप्यते ॥
वाङ् मातुरुच्यते गेयं धातुरित्यभिधीयते ।
वाचं गेयं च कुरुते यः स वाग्गेयकारकः ॥
शब्दानुशासनज्ञानमभिधानप्रवीणता ।
छन्दःप्रभेदवेदित्वमलंकारेषु कौशलम् ॥
रसभावपरिज्ञानं देशस्थितिषु चातुरी ।
अशेषभाषाविज्ञानं कलाशास्त्रेषु कौशलम् ॥
तूर्यत्रितयचातुर्यं हृद्यशारीरशालिता ।
लयतालकलाज्ञानं विवेको ऽनेककाकुषु ॥
प्रभूतप्रतिभोद्भेदभाक्त्वं सुभगगेयता ।
देशिरागेष्वभिज्ञत्वं वाक्पटुत्वं सभाजयः ॥
रागद्वेषपरित्यागश्चार्द्रत्वमुचितज्ञता ।
अनुच्छिष्टोक्तिनिर्बन्धो नूत्नधातुविनिर्मितेः ॥

परचित्तपरिज्ञानं प्रबन्धेषु प्रगल्भता ।
द्रुतगीतविनिर्माणं पद्यान्तरविदग्धता ॥
त्रिस्थानगमकप्रौढिर्विविधालप्तिनैपुणम् ।
अवधानं गुणैरेभिर्वरो वाग्गेयकारकः ॥
विदधानोऽधिकं धातुं मातुमन्दस्तु मध्यमः ।
धातुमातुविदप्रौढः प्रबन्धेष्वपि मध्यमः ॥
रम्यमातुविनिर्माताऽप्यधमो मन्दधातुकृत् ।
वरो वस्तुकविर्वर्णकविर्मध्यम उच्यते ॥
कुट्टिकारोऽन्यधातौ तु मातुकारः प्रकीर्तितः ।
॥ इति वाग्गेयकारलक्षणम् ॥

---

मार्गं देशीं च यो वेत्ति स गान्धर्वोऽभिधीयते ॥
॥ इति गान्धर्वलक्षणम् ॥

---

यो वेत्ति केवलं मार्गं स्वरादिः स निगद्यते ।
॥ इति स्वरादिलक्षणम् ॥

---

सर्वगानोपयोगित्वाच्छारीरं लक्ष्यतेऽधुना ॥
रागाभिव्यक्तिशक्तत्वमनभ्यासेऽपि यद् ध्वनेः ।
तच्छारीरमिति प्रोक्तं शरीरेण सहोद्भवात् ॥
तारानुध्वनिमाधुर्यरक्तिगाम्भीर्यमार्दवैः ।
घनतास्निग्धताकान्तिप्राचुर्यादिगुणैर्युतम् ॥
तत्सुशारीरमित्युक्तं लक्ष्यलक्षणकोविदैः ।
अनुध्वानविहीनत्वं रूक्षत्वं त्यक्तरक्तिता ॥
निःसारता विस्वरता काकित्वं स्थानविच्युतिः ।
कार्श्यं कार्कश्यमित्याद्यैः कुशारीरं तु दूषणैः ॥

विद्यादानेन तपसा भक्त्या वा पार्वतीपतेः ।
प्रभूतभाग्यविभवैः सुशारीरमवाप्यते ॥
॥ इति शारीरलक्षणम् ॥

---

निरूप्यन्ते ऽथ गमकाः सर्वगानोपयोगिनः ।
सूक्ष्मदृष्ट्या योजनीया लक्ष्यलक्षणसंगताः ॥
स्वरस्य कम्पो गमकः श्रोतृचित्तसुखावहः ।
स्वीयस्थानश्रुतिगतच्छायामन्याश्रयामपि ॥
छायां गमयतीत्येष गमकः परिकीर्तितः ।
ते च पञ्चदश प्रोक्ता गमका भरतादिभिः ॥
तिरुपः स्फुरितश्चैव कम्पितो लीन इत्यपि ।
आन्दोलितो वलिश्चाथ त्रिभिन्नः कुरुलाहतौ ॥
उल्लासितः प्लावितश्च हुम्फितो मुद्रितस्तथा ।
नामितो मिश्रितश्चेति भेदाः पञ्चदश स्मृताः ॥
अत्यल्पडमरुध्वानकम्पानुकृतिसुन्दरः ।
द्रुततुर्यांशवेगेन युक्तः कम्पः स्वरस्य यः ॥
स एव तिरुपो नाम गमकः परिकीर्तितः ।
यस्तु द्रुततृतीयांशवेगेन सहितो भवेत् ॥
स्वरकम्पः स एवोक्तः स्फुरितो नाम नामतः ।
दृश्यते तिरुपस्थाने ढालो लोके विकल्पतः ॥
तस्य ढालस्य लक्ष्मैवं पूर्वाचार्यैरुदीरितम् ।
ढालो मुक्ताफलस्येव चलनं लुण्ठनात्मकम् ॥
द्रुतार्धमानवेगेन स्वरकम्पस्तु कम्पितः ।
पूर्णद्रुतप्रमाणेन वेगेन सहितस्तु यः ॥
स्वरकम्पः स एवोक्तो गमको लीनसंज्ञकः ।
लघुप्रमाणवेगेन स्वरकम्पस्तु यो भवेत् ॥
स आन्दोलितनामेति गमकज्ञा वदन्ति हि ।
नानावक्रगतिस्वैरभिन्नवेगस्पृशां हि यः ॥
कम्पः स्वराणां स पुनर्वलिरित्यभिधीयते ।
वलिरेव ऋजुर्भूत्वा कुरुलो नाम कथ्यते ॥

क्लेशं विनैव मन्द्रादिस्थानत्रितयगामिनाम् ।
स्वराणां कम्पनं लोके त्रिभिन्न इति कथ्यते ॥
प्रागग्रिमस्वराद्वेगान्निवृत्तस्त्वाहतो मतः ।
यं उत्तरोत्तरं गच्छेत्क्रमेणैव स्वरान्तरात् ॥
तमुल्लासितनामानं गमकं ब्रुवते बुधाः ।
प्लुतप्रमाणवेगेन कम्पो यः प्लावितस्तु सः ॥
मनोज्ञतरहुंकारगर्भितस्वरकम्पनम् ।
हुम्फितं नाम गमकं गमकज्ञाः प्रचक्षते ॥
यो जायते स्वरे कम्पस्त्वधरद्वयमुद्रणात् ।
मुद्रितं नाम गमकः स एव समुदाहृतः ॥
मन्द्रे यस्त्ववरोहेण स्वरकम्पस्तु नामितः ।
एतेषां मिश्रणान्मिश्रस्तस्य स्युर्भूरयो भिदाः ॥
तेषां तु स्थायभागेषु विवृतिः संविधास्यते ।

॥ इति गमकाः ॥

---

अथ स्थाया निरूप्यन्ते रागावयवरूपिणः ।
सो ऽप्येकदेशो न्यासादिस्वरेष्वन्यतमाश्रितः ॥
अंशादीनां कतिपयस्वरसंदर्भ ईरितः ।
भारतीयादिशास्त्रानुरोधेन स्थायलक्षणम् ॥
निरूप्यते ऽत्र तुलजमहाराजेन धीमता ।
ते च स्थाया बहुविधा मुनिभिः परिकीर्तिताः ॥
मयोच्यन्ते प्रसिद्धाश्चासंकीर्णाः कतिचित्स्फुटम् ।

शब्दस्थायो ढालस्थायो लवलीस्थायो वहनीस्थायो वाद्यशब्दस्थायो यन्त्रस्थायश्छायास्थायः स्वरलङ्घितनामकः प्रेरितसंज्ञस्तीक्ष्णसंज्ञश्चेत्यसंकीर्णाः प्रसिद्धा दश स्थायाः । तथा चोक्तं भारतीये—

ते च शब्दस्य ढालस्य लवन्या वहनेरपि ॥
वाद्यशब्दस्य यन्त्रस्य च्छायायाः स्वरलङ्घितः ।
प्रेरितस्तीक्ष्ण इत्युक्ता ह्यसंकीर्णलक्षणाः ॥ इति ।

एतेषां निरुक्तिस्तत्रैव—

मुक्तशब्दप्रतिमाद्याः स्थायाः शब्दस्य कीर्तिताः ।
ढालो मुक्ताफलस्येव चलनं लुण्ठनात्मकम् ॥
स येषु ते स्युर्ढालस्य नमनं त्वतिकोमलम् ।
लवनी तद्युजः स्थाया लवन्याः परिकीर्तिताः ॥
यत्तु कम्पनमारोहिण्यवरोहिणि वा भवेत् ।
वहनी सा ऽपि संचारिण्यपि वा स्थिरकम्पनम् ॥
सा गीतालप्तिसंबन्धभेदेन द्विविधा मता ।
पुनर्द्विधा स्थिरा वेगाढ्या पुनस्त्रिविधोदिता ॥
हृद्या कण्ठ्यशिरस्या च देहस्था हृदयोद्भवा ।
वहनिः स्यात्पुनर्द्वेधा खुत्तोत्फुल्लेति भेदतः ॥
यस्यामन्तर्विशन्तीव स्वराः खुत्तेति सा मता ।
सोत्फुल्लेत्युदिता यस्यां निर्यान्तीवोपरि स्वराः ॥
वलिर्या गमकेषूक्ता सा ऽप्येवंविधभेदभाक् ।
वहनी येषु ते स्थाया वहन्याः परिभाषिताः ॥
रागमग्ना वाद्यशब्दा येषु ते वाद्यशब्दजाः ।
ये यन्त्रेष्वेव दृश्यन्ते बाहुल्यात्ते तु यन्त्रजाः ॥
छाया काकुः षट्प्रकारा स्वररागा ऽन्यरागजा ।
स्याद्देशक्षेत्रयन्त्राणां तल्लक्षणमथोच्यते ॥
श्रुतिन्यूनाधिकत्वेन या स्वरान्तरसंश्रया ।
स्वरान्तरस्य रागे स्यात्स्वरकाकुरसौ मता ॥
या रागस्य निजच्छाया रागकाकुं तु तां विदुः ।
सा त्वन्यरागकाकुर्या रागे रागान्तराश्रया ॥
सा देशकाकुर्या रागे भवेद्देशस्वभावतः ।
शरीरं क्षेत्रमित्युक्तं प्रतिक्षेत्रं निसर्गतः ॥
रागे नानाविधा काकुः क्षेत्रकाकुरिति स्मृता ।
वीणावंशादियन्त्रोत्था यन्त्रकाकुः सतां मता ॥
अन्यच्छायाप्रवृत्ता ये छायाऽन्तरमुपाश्रिताः ।
छायायास्ते मताश्छाया गीतविद्याविशारदैः ॥
मध्ये मध्ये स्वरान्भूरील्लङ्घयन्स्वरलङ्घितः ।

तिर्यगूर्ध्वमधस्ताच्च प्रेरितः प्रेरितैः स्वरैः ॥
स्वरः पूर्णश्रुतिस्तारे तीक्ष्णवत्तीक्ष्ण उच्यते ।
॥ इत्यसंकीर्णा दश स्थायाः ॥

भजनस्थायः, स्थापनास्थायः, गतिस्थायः, नादस्थायः, ध्वनिस्थायः, छविस्थायः, रक्तिस्थायः, द्रुतस्थायः, भृतस्थायः, अंशस्थायः, अवधानस्थायः, अपस्थानस्थायः, निकृतिस्थायः, करुणास्थायः, विविधत्वस्थायः, गात्रस्थायः, उपशमस्थायः, काण्डारणास्थायः, निर्जवनास्थायः, गाढस्थायः, ललितगाढस्थायः, ललितस्थायः, लुलितस्थायः, समस्थायः, कोमलस्थायः, प्रसृतस्थायः, स्निग्धस्थायः, चोक्षस्थायः, उचितस्थायः, सुदेशिकस्थायः, अपेक्षितस्थायः, घोषस्थायः, स्वरस्थायः ॥

रागस्यातिशयाधानं प्रयत्नाद् भजनं मतम् ।
तद्युक्ता भजनस्य स्युः स्थापनायास्तु ते मताः ॥
स्थापयित्वा स्थापयित्वा येषां प्रतिपदं कृतिः ।
सविलासा ऽस्ति गीतस्य मत्तमातङ्गवद्गतिः ॥
तद्युक्तास्तु गतेः स्थायाः स्निग्धो माधुर्यमांसलः ।
बहुलो येषु नादः स्यात्ते नादस्य प्रकीर्तिताः ॥
अतिदीर्घप्रयोगास्तु स्थाया ये ते ध्वनेर्मताः ।
युक्ताः कोमलया कान्त्या च्छवेः स्थाया निरूपिताः ॥
रक्तेरुत्कर्षतो रक्तेरुक्ताः स्थाया मनीषिभिः ।
द्रुतस्यान्वर्थनामानो भृतस्य भरणाद् ध्वनेः ॥
रागान्तरस्यावयवो रागेंशः स च सप्तधा ।
कारणांशश्च कार्यांशः सजातीयस्य चांशकः ॥
सदृशांशो विसदृशांशो मध्यस्थांशको ऽपरः ।
अंशांशश्चेति यो रागे कार्येंशः कारणोद्भवः ॥
कारणांशस्त्वसौ रामकृतौ कोलाहलांशवत् ।
कारणे कार्यरागांशः कार्यांशो भैरवे यथा ॥
भैरव्यंशः समां जातिं गौडत्वाद्यां समाश्रितः ।
कर्णाटाद्याः सजातीयास्तेष्वेकांशो ऽपरत्र यः ॥
सजातीयांशकः स स्यादंशः सदृशरागयोः ।
सदृशांशो यथा नट्टावराट्योः शुद्धयोर्मिथः ॥

साहश्यशून्ययोरंशो ऽत्यन्तं विसदृशांशकः ।
वेलावल्याश्च गुर्जर्याः परस्परगतौ यथा ॥
मध्यस्थरागौ सादृश्यवैसादृश्यविवर्जितौ ।
मध्यस्थांशस्तयोरंशो नट्टादेशाख्ययोरिव ॥
अंशेंशान्तरसंचारादंशांश इति कीर्तितः ।
येष्वंशो दृश्यते स्थायास्तेंशस्य परिकीर्तिताः ॥
मनसा तद्गतेनैव ये ग्राह्यास्ते ऽवधानजाः ।
आयासेन विना यत्र स्थाने स्यात्प्रचुरो ध्वनिः ॥
स्वस्थानं तदपस्थानं त्वायासेन तदुद्गतः ।
अपस्थानस्य ते स्थाया ये ऽपस्थानसमुद्भवाः ॥
निकृतेः करुणायाश्च स्थायास्त्वन्वर्थनामकाः ।
स्थाया नानाविधा भङ्गीर्भजन्तो विविधत्वजाः ॥
गात्रस्य गात्रे निरताः कृत्वा तीव्रतरं ध्वनिम् ।
येषूपशान्तिः क्रियते भवन्त्युपशमस्य ते ॥
काण्डारणा प्रसिद्धैव तस्याः स्थायास्तदुद्भवाः ।
सरलः कोमलो रक्तः क्रमाश्रितो ऽतिसूक्ष्मताम् ॥
स्वरस्याद्येषु ते स्थायाः प्रोक्ता निर्जवनान्विताः ।
गाढः शैथिल्यनिर्मुक्तः स एव मृदुताऽन्वितः ॥
भवेल्ललितगाढस्तु ललितस्तु विलासवान् ।
मार्दवाघूर्णितः प्रोक्तो लुलितः स्यात्समः पुनः ॥
हीनो वेगाविलम्बाभ्यां यथाऽर्थः कोमलो मतः ।
प्रसृतः प्रसृतोपेतः स्निग्धो रूक्षत्ववर्जितः ॥
उज्ज्वलो गदितश्चोक्ष उचितस्तु यथाऽर्थकः ।
सुदेशिको विदग्धानां वल्लभो ऽपेक्षितस्तु सः ॥
स्थायः स्थायेन पूर्वेण पूर्त्यर्थं यो ऽभिकाङ्क्षितः ।
वलौ वह्ने वह्न्यां च यः स्निग्धमधुरो महान् ॥
मन्द्रे ध्वनिः स घोषः स्यात्तद्युक्ता घोषजा मताः ।
गम्भीरमधुरध्वाना मन्द्रे ये स्युः स्वरस्य ते ॥
॥ इति त्रयस्त्रिंशत्संकीर्णाः स्थाया गुणभिन्नाः प्रसिद्धाश्च ॥

अन्ये ऽप्युक्ता एवमाद्याः स्थाया ये भरतादिभिः
ते ग्रन्थविस्तरत्रासादस्माभिर्न समीरिताः ॥
तत्र तेषामन्तिमो यो मिश्रस्थायः प्रकीर्तितः ।
मिश्रस्य भेदा आनन्त्याद्भाषितुं नैव शक्यते ॥
दिक्प्रदर्शनमात्रार्थमुच्यन्ते तेषु केचन ।
गमकानां मेलनेन मिश्रस्थाय इतीर्यते ॥
यो यस्मिन्बहुलः स्थायः स तेन व्यपदिश्यते ।
साम्ये तु मिश्रनामैव स त्विदानीं प्रपञ्च्यते ॥
तिरुपान्दोलितो लीनकम्पितः कम्पिताहतः ।
तिरुपस्फुरितो लीनस्फुरितः स्फुरिताहतः ॥
लीनकम्पितलीनश्च त्रिभिन्नकुरुलाहतः ।
प्लावितोल्लासितवलिर्वलिहुम्फितमुद्रितः ॥
नामितान्दोलितवलिर्वलिनामितकम्पितः ।
आन्दोलितप्लावितकसमुल्लासितनामितः ॥
तिरुपान्दोलितवलिस्त्रिभिन्नकुरुलो ऽपरः ।
त्रिभिन्नलीनस्फुरितप्लावितान्दोलितः परः ॥
इत्याद्या बहवः प्रोक्ता मुनिभिर्भरतादिभिः ॥

॥ इति स्थायवागप्रकरणम् ॥

---

अथ श्रीतुलजेन्द्रेण रागालप्तिर्निरूप्यते ।
यदत्र रागालपनं सा ऽऽलप्तिरिति बोधिता ।
आलप्तित्वेन वा रागप्रकटीकरणं मतम् ॥
सा रागालप्तिरेकैका ऽन्या रूपकालप्तिसंज्ञिका ।
द्विविधा कथिता तज्ज्ञैरनपेक्ष्यैव रूपकम् ॥
रागालप्तिश्चतुर्भिः स्यात्स्वरस्थानैरिति तां विदुः ।
रागोपवेशनाधारस्वरः स्थायीति कथ्यते ।
स्थायिस्वराच्चतुर्थस्तु द्व्यर्धसंज्ञः प्रकीर्तितः ॥
द्व्यर्धादधस्तनानेकस्वरेषु चालनं बुधाः ।
मुखचाल इति प्राहुर्यत्तत्स्वस्थानमादिमम् ॥

तद्वद्वयर्धस्वरमप्यत्र संचाल्य स्थायिनि न्यसेत् ।
एतद् द्वितीयं संस्थानमिति गीतविदो विदुः ॥
एतदेव तृतीयं स्वस्थानमित्युच्यते बुधैः ।
यत्रोपवेश्यते रागः स्वरे स्थायी स कथ्यते ॥
स्थायिस्वरादष्टमस्तु द्विगुणः परिकीर्तितः ।
द्विगुणेन सह द्वयर्धस्थितान्गीत्वा स्थितान्परान् ॥
स्थायिनि न्यसनं कुर्यादित्येतत्स्याच्चतुर्थकम् ।
चतुर्भिरेभिः स्वस्थानै रागालप्तिरितीरिता ॥
स्वल्पैः स्थायैस्तथा रागान्तरसाधारणाश्रयैः ।
किंचित्प्रतीयमानत्वं रागस्यानेन साधितम् ॥
रूपकाख्यप्रबन्धस्थरागतालसमन्विता ।
रूपकालप्तिरित्युक्ता सा द्विधा गदिता बुधैः ॥
प्रतिग्राहणिका चान्या भञ्जनीति प्रकीर्तिता ।
गीत्वा ऽऽद्यौ स्थायमालप्ते रूपकस्यैकदेशतः ॥
प्रतिगृह्येत चेदेषा प्रतिग्राहणिका मता ।
भञ्जन्यपि द्विधा प्रोक्ता स्थायरूपकभञ्जनात् ॥
रूपकाख्ये स्थितः स्थाये तस्यैकदेशमानतः ।
नानाविधश्चेत्क्रियते ज्ञेया ऽसौ स्थायभञ्जनी ॥
तद्विदारीभागमित्या समग्रं रूपकं यदि ।
अन्यथा चान्यथा गायेदसौ रूपकभञ्जनी ॥
वर्णालंकारसंपन्ना गमकस्थायचित्रिता ।
आलप्तिरुच्यते तज्ज्ञैर्भूरिभङ्गिमनोरमा ॥

तथा चोक्तं रत्नाकरे—

रागालपनमालप्तिः प्रकटीकरणं मतम् ।
सा द्विधा गदिता रागरूपकाभ्यां विशेषणात् ॥
रागालप्तिस्तु गेया स्यादनपेक्ष्यैव रूपकम् ।
स्वस्थानैः सा चतुर्भिः स्यादिति गीतविदो विदुः ॥
यत्रोपविश्यते रागः स्वरे स्थायी स कथ्यते ।
ततश्चतुर्थो द्व्यर्धः स्यात्स्वरस्तस्मादधस्तने ॥
चालनं मुखचालः स्यात्स्वस्थानं प्रथमं तु यत् ।
द्व्यर्धस्वरे चालयित्वा न्यसनं तद् द्वितीयकम् ॥

स्थायिस्वरादष्टमस्तु द्विगुणः परिकीर्तितः ।
द्व्यर्धद्विगुणयोर्मध्ये स्थिता अर्धस्थिताः स्वराः ॥
अर्धस्थिते चालयित्वा न्यसनं तु तृतीयकम् ।
द्विगुणे चालयित्वा तु स्थायिन्यासाच्चतुर्थकम् ॥
एभिश्चतुर्भिः स्वस्थानै रागालप्तिर्मता सताम् ।
स्तोकस्तोकैस्ततः स्थायैः प्रसन्नैर्बहुभङ्गिभिः ॥
जीवस्वरव्याप्तिमुख्यै रागस्य स्थापना भवेत् ।
रूपकस्थेन रागेण तालेन च विधीयते ॥
या सोक्ता रूपकालप्तिः सा पुनर्द्विविधा भवेत् ।
प्रतिग्रहणिकैका ऽन्या भञ्जनीत्यभिधीयते ॥
विधाय स्थायमालप्ते रूपकावयवो यदि ।
प्रतिगृह्येत सा प्रोक्ता प्रतिग्रहणिका बुधैः ॥
भञ्जनी द्विविधा ज्ञेया स्थायरूपकभञ्जनात् ।
यदा तत्पदमानेन स्थायो रूपकसंस्थितः ॥
नानाप्रकारः क्रियते सा ज्ञेया स्थायभञ्जनी ।
तैः पदैस्तेन मानेन समग्रं रूपकं यदि ॥
अन्यथा चान्यथा गायेदसौ रूपकभञ्जनी ।
वर्णालंकारसंपन्ना गमकस्थायचित्रिता ।
आलप्तिरुच्यते तज्ज्ञैर्भूरिभाङ्गिमनोरमा ॥
॥ इत्यालप्तिलक्षणम् ॥

---

प्रसिद्धमत्र यद् वृन्दं तदिह प्रतिपाद्यते ।
गातृवादकसंघातो वृन्दमित्यभिधीयते ॥
उत्तमं मध्यममथो कनिष्ठमिति तत् त्रिधा ।
चत्वारो मुख्यगातारो द्विगुणाः समगायनाः ॥
गायन्यो द्वादश प्रोक्ता वांशिकानां चतुष्टयम् ।
मार्दङ्गिकास्तु चत्वारो यत्र तद् वृन्दमुत्तमम् ॥
मध्यमं स्यात्तदर्धेन कनिष्ठे मुख्यगायनः ।
एकः स्यात्समगातारस्त्रयो गायनिकाः पुनः ॥

चतस्रो वांशिकद्वंद्वं तथा मार्दलिकद्वयम् ।
उत्तमे गायनीवृन्दे मुख्यगायनिकाद्वयम् ॥
दश स्युः समगायन्यो वांशिकत्रितयं तथा ।
भवेन्मार्दलिकद्वंद्वं मध्यमे मुख्यगायनी ॥
एका स्यात्समगायन्यश्चतस्रो वांशिकास्तथा ।
इतो न्यूनं तु हीनं स्याद्यथेष्टमथ वा भवेत् ॥
उत्तमाभ्यधिकं वृन्दं कोलाहलमितीरितम् ।
मुख्यानुवृत्तिर्मिलनं ताललीलाऽनुवर्तनम् ॥
मिथस्त्रुटितनिर्वाहस्त्रिस्थानव्याप्तिशक्तता ।
शब्दसादृश्यमित्येते प्रोक्ता वृन्दस्य षड् गुणाः ॥
आह वृन्दविशेषं तु कुतपं भरतो मुनिः ।
ततस्य चावनद्धस्य नाट्यस्येति त्रिधा च सः ॥
ततः स कुतपो ज्ञेयो गायनः सपरिग्रहः ।
वीणा घोषवती चित्रा विपञ्ची परिवादिनी ॥
वल्लकी कुब्जिका ज्येष्ठा नकुलोष्ठी च किंनरी ।
जया कूर्मी पिनाकी च हस्तिका शततन्त्रिका ॥
औदुम्बरी च षट्कर्णः पौणो रावणहस्तकः ।
सारङ्ग्यालपनीत्यादेस्ततवाद्यस्य वादकाः ॥
वांशिकाः पाविकाः पावकाहलाः शङ्खवादकाः ।
मुहुरीशृङ्गवाद्याद्यास्तथा तालधरा वराः ॥
कुतपे त्ववनद्धस्य मुख्यो मार्दङ्गिकस्ततः ।
पणवो दर्दुरो ढक्का माण्डडक्का च डक्कुली ॥
पटहः करटा ढक्का ढवसो घडसस्तथा ।
हुडुक्का डमरू रुञ्जा कुडुक्का कुडुवा तथा ॥
निःस्वानस्त्रिवली भेरी तम्बकी बोम्बडी तथा ।
पट्टवाद्यं पटः कम्राडावजावजसेल्लुकाः ॥
जयघण्टा कांस्यतालो घण्टा च किरिकिट्टिका ।
वाद्यानामेवमादीनां पृथग्वादकसंचयः ॥
वराटलाटकर्णाटगौडगुर्जरकौङ्कणैः ।
महाराष्ट्रान्ध्रहम्मीरचौलैर्मलयमालवैः ॥

अङ्गवङ्गकलिङ्गाद्यैर्नानाऽभिनयकोविदैः ।
अङ्गहारप्रयोगज्ञैर्लास्यताण्डवकोविदैः ॥
विचित्रस्थानकप्रौढैर्विषमेषु सुशिक्षितैः ।
नाटस्य कुतपः पात्रैरुत्तमाधममध्यमैः ॥
कुतपानाममीषां तु समूहो बृन्दमुच्यते ॥

॥ इति बृन्दलक्षणम् ॥

इति श्रीराजाधिराजभोसलकुलतिलकतुलजामहाराजविरचिते
संगीतसारामृते प्रकीर्णकप्रकरणम्
चतुर्दशम्

॥ ग्रन्थश्च समाप्तः ॥

